पृथगर्थानामिति पृथगर्थक्रियाकारित्वादिति यावत् । देहा अन्तवन्तः विनाशिनश्च । आत्मा तु नित्यः यतोऽप्रमेयः । प्रमेयस्य तु जडस्य परिणामित्वम्; न तु अजडस्य चिदेकरूपस्य, स्वभावान्तरायोगात् । एवं देहा नित्यमन्तवन्त इति शोचितुमशक्याः । आत्मा नित्यमविनाशी, तेन न शोचनार्हः । तन्त्रेण अयमेकः कृत्यप्रत्ययो द्वयोरर्थयोर्मुनिना दर्शितः 'अशोच्यान्'इति ॥ १९ ॥

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ २० ॥

य एनमिति । एनमात्मानं देहं च यो हन्तारं हतं च वेत्ति तस्याज्ञानम् । अत एव स बद्धः[1] ॥ २० ॥

एतदेव स्फुटयति—

न जायते म्रियते वा कदाचिन् नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २१ ॥

न जायते इति । नायं भूत्वेति । अयमात्मा न न भूत्वा भविता[2], अपि तु भूत्वैव । अतो न जायते, न च म्रियते; यतो भूत्वा न न भविता, अपि तु भवितैव ॥ २१ ॥

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ हन्यते हन्ति वा कथम् ॥ २२ ॥

1. S सम्बन्धः
2. S omits भविता

वेदेति । य एनमात्मानं प्रबुद्धत्वात् जानाति 'स न हन्ति न स हन्यते' इति तस्य कथं बन्धः[1]? ॥ २२ ॥

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२३॥

वासांसि इति । यथा वस्त्राच्छादितः तद्वस्त्रनाशे समुचित-वस्त्रान्तरावृतो न विनश्यति[2], एवमात्मा देहान्तरावृतः । २३ ॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २४ ॥

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २५ ॥

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २६ ॥

नैनमित्यादि । नास्य नाशकारणं शस्त्रादि किंचित्करम् । चिदेकस्वभावस्य अनाश्रितस्य[3] निरंशस्य[4] स्वतन्त्रस्य स्वभावान्तरापत्त्याश्रयविनाशावयवविभाग विरोधिप्रादुर्भावादिक्रमेण[5] नाशयितुमशक्यत्वात् । न च देहान्तरगमनमस्य अपूर्वम्, देहान्वितोऽपि[6] सततं देहान्तरं गच्छति, तेन संबध्यते इत्यर्थः ।

1. N omits इति—बन्धः
2. N omits यथा——न विनश्यति ।
3. B,N,K add निरपेक्षस्य after अनाश्रितस्य
4. N omits निरंशस्य; S adds निरवयवस्य after निरंशस्य
5. S,B प्रक्रमेण
6. B,N अपूर्वदेहान्वित्योऽपि

देहस्य क्षणमात्रमप्यनवस्थायित्वात्। एवंभूतं विदित्वा एवमात्मानं शोचितुं नार्हसि ॥ २४-२६ ॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
तथापि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २७ ॥

अथ चैनमिति। अथाप्येनं देहं मन्यसे नित्यजातं, प्रवाहस्याविनाशात्; तथापि न शोच्यता। क्षणिकप्रक्रियया वा नित्यविनाशिनम्; तथापि का शोच्यता? एवं यद्यात्मनः [1]तत्तद्देहयोगवियोगाभ्यां नित्यजातत्वं नित्यमृतत्वं वा मन्यसे, तथापि सर्वथा शोचनं [2]प्रामाणिकानामयुक्तम् ॥ २७ ॥

न चैतदन्यथा [3]नित्यानित्यत्वमुपपत्तिमत्। यतः[4]—

जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २८ ॥

जातस्येति। जन्मनः अनन्तरं नाशः, नाशादनन्तरं जन्मेति चक्रवदयं जन्ममरणसन्तान इति किंपरिमाणं शोच्यताम्[5] इति ॥ २८ ॥

अपि च—

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना ॥ २९ ॥

---

1. S,K तद्देहयोग (K संयोग)
2. B,N प्राकरणि—
3. N,K नित्यत्वानित्यत्वम्
5. S adds कुत इत्याह after यतः
5, N शोच्यतायाम्

अव्यक्तादीनीति। नित्याः सन्तु अनित्या वा; यस्तावदस्य शोचकस्तं प्रत्येष आदावव्यक्तः अन्ते चाव्यक्तः। मध्ये तस्य व्यक्तता विकारः[1] इति। प्रत्युत विकारे शोचनीयं[2], न स्वभावे। किं च यत्[3] तन्मूलकारणं किञ्चिदभिमतं तदेव यथाक्रमं[4] विचित्रस्वभावतया स्वात्ममध्ये दर्शिततत्तदनन्तसृष्टिस्थितिसंहृतिवैचित्र्यं[5] नित्यमेव। तथास्वभावेऽपि कास्य[6] शोच्यता? ॥ २८ ॥

एवंविधं च—

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैनमन्यः।
आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥

आश्चर्यवदिति। ननु यद्येवमयमात्मा अविनाशी, किमिति सर्वेण तथैव नोपलभ्यते? यतः अद्भुतवत्कश्चिदेव पश्यति; श्रुत्वापि [7]एनं न कश्चित्[8] वेत्ति न[9] जानाति ॥ ३० ॥

देही नित्यमवध्योऽयं देहे सर्वस्य भारत।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३१ ॥

देहीति। अतो नित्यमात्मनोऽविनाशित्वम् ॥ ३१ ॥

---

1. B,N omit विकारः
2. N शोचनीयस्वभावे
3. N omits यत्
4. S तथाक्रमविचित्र—
5. S —सृष्टिप्रतिसंहृति—
6. S —स्वभावमिति कास्य
7. N omit एनम्
8. S,B,N न कश्चिदेव जा(B,N कश्चिज्जा)नाति न वेत्ति
9. K omits न

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते ॥ ३२ ॥

स्वधर्ममिति । स्वधर्मस्य च अनपहार्यत्वात्[1] युद्धविषयः कम्पो न युक्तः ॥ ३२ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुख्योऽन्ये(?) क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३३ ॥

यदृच्छयेति । अन्येऽपि ये[2] काममयाः क्षत्रियाः तैरपीदृशं युद्धं स्वर्गहेतुत्वात् न त्याज्यम् । किं पुनर्यस्य ईदृशं ज्ञानमुपदिष्टम् इति तात्पर्यम् । न पुनः स्वर्गपर्यवसायी श्लोकः[3] ॥ ३३ ॥

यद्भयाच्च भवान् युद्धात् निवर्तते[4] तदेव शतशाखमुपविपतिष्यति भवत इत्याह—

अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३४ ॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३५ ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
एषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३६ ॥

---

1. S,B,N अपरिहार्यत्वात्
2. N omits ये
3. B,N omit न पुनः- - - - श्लोकः
4. K निवर्तेत

अवाच्यवादांश्च बहून् वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३७ ॥
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३८ ॥

अथ चेत्यादि । श्लोकपञ्चकमिदम् [1]अभ्युपगम्यवादरूपमुच्यते 'यदि लौकिकेन व्यवहारेणास्ते भवान् तथाप्यवश्यानुष्ठेयमेतत्' ॥ ३४–३८ ॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३९ ॥

सुखदुःखे इति । तव तु स्वधर्मतयैव कर्माणि कुर्वतो न कदाचित् पापसंबन्धः ॥ ३९ ॥

एषा तेऽभिहिता सांख्ये बुद्धिर्योगे यथा शृणु (?) ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ४० ॥

एषा त इति । एषा च तव सांख्ये सम्यग्ज्ञाने बुद्धिर्निश्चयात्मिका उक्ता । एषैव च यथा योगे कर्मकौशलाय उच्यते[2] तथैव शृणु; यया बुद्ध्या कर्मणां बन्धकत्वं त्यक्ष्यसि । न हि कर्माणि स्वयं बध्नन्ति, जडत्वात् । अतः स्वयमात्मा कर्मभिः वासनात्मकैरात्मानं बध्नाति ॥ ४० ॥

नेहातिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४१ ॥

---

1. B,N उपगम्य
2. S,K कौशले यो(S य)ज्यते

नेहेति । इह[1] अस्यां बुद्धौ अतिक्रमेण अपराधेन प्रमादेन नाशो न भवति, प्रमादस्याभावात् । यथा च[2] परिमितेन श्रीखण्डकणेन ज्वालायमानोऽपि तैलकटाहः सद्यः शीतीभवति[3], एवं अनया स्वल्पयापि[4] योगबुद्ध्या महाभयं संसाररूपं विनश्यति ॥ ४१ ॥

न चैषा बुद्धिरपूर्वानीयते । किं तर्हि ?

व्यवसायात्मिका बुद्धिरेकैव कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४२ ॥

व्यवसायात्मिकेति । व्यवसायात्मिका सर्वस्यैकैव[5] सहजा[6] धीः निश्चेतव्यवशात् तु बहुत्वं गच्छति ॥ ४२ ॥

तथाच—

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादपराः पार्थ नान्यदस्तीति वादिनः ॥ ४३ ॥
कामात्मानः स्वर्गपराः जन्मकर्मफलेप्सवः ।
क्रियाविशेषबहुला भोगैश्वर्यगतीः प्रति ॥ ४४ ॥
भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४५ ॥

1. S,K omit इह
2. S,N तथा च
3. N शीतो भवति
4. S omits अपि
5. S सर्वस्यैव
6. N omits सहजा

यामिमामित्यादि। ये कामाभिलाषिणः ते स्वयमेतां वाचं वेदात्मिकां पुष्पितां [1]भविष्यत्स्वर्गफलेन व्याप्तां वदन्ति। अत एव जन्मदः कर्मैव फलमिच्छन्ति ते अविपश्चितः। ते च तयैव स्वयं कल्पितया वेदवाचा अपहृतचित्ताः व्यवसायबुद्धियुक्ता अपि न समाधियोग्याः, तत्र फलनिश्चयत्वात्। इति श्लोकत्रयस्य तात्पर्यम्॥ ४३-४५॥

अत एव च—

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥ ४६॥

त्रैगुण्येति। वेदास्त्रैगुण्येन करणेन[2] विशेषेण सिन्वन्ति बध्नन्ति[3] न[4] तु [स्वयं] बन्धका; यस्मात् सुखदुःखमोहबुद्ध्या कर्माणि वैदिकानि क्रियमाणानि बन्धकानि, अतः त्रैगुण्यं काम-रूपं त्याज्यम्। यदि तु वेददूषणपरमेतदभविष्यत् प्रकृतं युद्ध-करणं व्यघटिष्यत, वेदादन्यस्य स्वधर्मनिश्चायकत्वाभावात्। येषां तु फलाभिलाषो विगलितः तेषां न वेदाः बन्धकाः॥ ४६॥

यतो वेदाः परं तेषां सम्यग्ज्ञानोपयोगिनः अत एवाह[5]—

यावानर्थ उदपाने सर्वतः संप्लुतोदके।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥ ४७॥

1. B,N omit भविष्यत्; S reads भविष्यता
2. B,N कारणेन
3. N बध्नन्तीति
4. B,N omit न तु
5. K omits एव

यावानिति । यस्य [1]स्वधर्ममात्रे ज्ञाने वा प्राधान्यं [तस्य] परिमितादपि वेदभाषितात् कार्यं [सम्पद्यते] ॥ ४७ ॥

अतश्च—

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४८ ॥

कर्मणीति । कर्ममात्रे त्वं व्यापृतो भव, न तु कर्मफलेषु। ननु कर्मणि कृते[2] नान्तरीयकतयैव फलमापततीति ? मैवम् । तत्र हि यदि त्वं फलकामनाकालुष्यव्याप्तो भवसि, तदा कर्मणां फलं प्रति हेतुत्वम् । यत् अप्रार्थ्यमानं फलं [3]तत् ज्ञानं नानिच्छोस्तत् इति । कर्माभावेन यः संगः स एव गाढग्रहरूपो मिथ्याज्ञानस्वरूपः इति त्याज्य एव[4] ॥ ४८ ॥

किं तर्हि—

योगस्थः कुरु कर्माणि संगं त्यक्त्वा धनञ्जय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४९ ॥

योगस्थ इति । योगे स्थित्वा कर्माणि कुरु । साम्यं च योगः ॥ ४९ ॥

यस्य सर्वे समारंभा निराशीर्बन्धनास्त्विह ।
त्यागे यस्य हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ५० ॥

---

1. N omits स्व-
2. B omits कृते; N substitutes ज्ञाते
3. S,B,N omit तत्
4. B,N इत्यत्याज्य एव

यस्य सर्व इति । यस्य सर्वे व्यापारा: आशीरूपेण बन्धनेन व[1] युक्ता: । अभिलाषो हि बन्धक: ॥ ५० ॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ५१ ॥

Beck A. Sharma
Nun is a novel
exercise

दूरेण हीति । बुद्धियोगात्किल हेतो: अवरं दुष्टफलयुक्तं[2] रिक्तं[3] कर्म दूरीभवति । अतस्तादृश्यां बुद्धौ शरणमन्विच्छ प्रार्थयस्व, येन सा बुद्धि: लभ्यते ॥ ५१ ॥

बुद्धियुक्तो जहातीमे उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५२ ॥

बुद्धियुक्त इति । उभे इति परस्परव्यभिचारं दर्शयति । तस्माद्योगायेति । यथा हि सुकृतदुष्कृते नश्यत.[4], तथाकरणमेव परमं कौशलमिति भाव: ॥ ५२ ॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५३ ॥

कर्मजमिति । योगबुद्धियुक्ता: कर्मणां फलं त्यक्त्वा जन्मबन्धं त्यजन्ति ब्रह्मसत्तामाप्नुवन्ति[5] ॥ ५३ ॥

---

1. B,N omit व
2. K omits युक्तं
3. B omits रिक्तं
4. N –दुष्कृते न नश्यतः
5. S,K अवाप्नुवन्ति

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५४ ॥
श्रुतिविप्रतिपन्ना ते यथा स्थास्यति निश्चिता ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५५ ॥

यदा ते इति । श्रुतीति । तत्र च योगबुद्धिप्राप्त्यवसरे तव स्फुटमेवेदमभिज्ञानम्—श्रोतव्यस्य[1] श्रुतस्य अभिलष्यमाणस्य च[2] आगमस्य उभयस्यापि निर्वेदभावत्वम्[3] । अनेन चेदमुक्तम् - अविद्यापद[4]निपतितप्रमात्रनुग्राहकशास्त्रश्रवणसंस्कारविप्रलम्भमहिमा अयं यत् तवास्थाने कुलक्षयादिदोषदर्शनम् । तत्तु तथाशासनबहुमानविगलने विगलिष्यति इति ॥ ५४-५५ ॥

अर्जुन उवाच—

स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थिरधीः किं प्रभाषेत किमासीत व्रजेच्च किम् ॥ ५६ ॥

स्थितप्रज्ञस्येति । 'यदा स्थास्यति बुद्धिः' इत्यनेन वचसा समाधिस्थस्य योगिनो यः [5]स्थितप्रज्ञशब्दः[6] तत्र वाचक उक्तस्तस्य का भाषा, किं प्रवृत्तिनिमित्तम्? भाष्यते येन निमित्तेन शब्दैरर्थ इति कृत्वा । योगिनः स्थितप्रज्ञशब्दः[6] किं रूढ्या

1. S omits श्रोतव्यस्य
2. N वा instead of च
3. S,B,K —भावत्वम्
4. B,N अविद्यामद
5. स्थित and स्थिर are found often interchanged in *CA*.
6. B,N omit शब्दः

वाचकः, अन्वर्थतया [1]वा? इत्येकः प्रश्नः। यद्यपि रूढौ शङ्कैव नास्ति; तथापि अन्वर्थतां लब्धामपि स्वरूपलक्षणनिमित्तनिरूपणेन[2] स्फुटीकर्तुमेष[3] प्रश्नः। स्थिरधीरिति शब्दपदार्थकः अर्थपदार्थकश्च। तत्र[4] स्थिरधीशब्दः किं प्रयोगलक्षणमेवार्थमाह, आहो तपस्विनमपि? इति द्वितीयः प्रश्नः। स च स्थिरधीर्योगी किमासीत किमभ्यसेत्, क्वास्य स्थैर्यं स्यात्? इति तृतीयः। अभ्यस्यंश्च[5] किमाप्नुयात् इति चतुर्थः। एतदेव प्रश्नचतुष्टयं क्रमेण निर्णीयते भगवता[6] ॥ ५६ ॥

श्रीभगवानुवाच—

प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५७ ॥

प्रजहातीति। स्थिता रूढा प्रज्ञा यस्य। रूढिश्च नित्यमात्मरूढित्वे सति विषयविक्षेपकृतस्य कामरूपस्य[7] भ्रमस्य निवृत्तत्वात् योगिनो यः स्थितप्रज्ञशब्दः अन्वर्थः, स च [8]इत्थं युक्तः इत्येकः प्रश्नो निर्णीतः ॥ ५७ ॥

---

1. S omits वा
2. B,N -स्वरूपेण
3. S प्रस्फुटी-
4. B,N omit च, तत्र
5. N अभ्यसंश्च
6. S इति प्रश्नचतुष्टयम् अज्ञा(र्जु?)नेन कृतं क्रमेण निर्णीयते श्रीभगवता
7. N omits कामरूपस्य
8. N omits इत्थं

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते ॥ ५८ ॥

दुःखेष्विति । सुखदुःखयोर्यस्य रागद्वेषरहिता[1] वृत्तिः स मुनिरेव स्थितप्रज्ञः नान्यः ॥ ५८ ॥

युक्तं चैतत् यतः—

यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५९ ॥

यः सर्वत्रेति । शुभाशुभप्राप्तौ तस्याह्लादतापौ न भवतः ॥५९॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वतः ।
इन्द्रियाणीन्द्रियार्थेभ्यः स्थितप्रज्ञस्तदोच्यते ॥ ६० ॥

यदा संहरते इति । न चास्य पाचकवद्योगरूढत्वम् । यदा यदा किलायमिन्द्रियाणि संहरते आत्मन्येव, कूर्म इवाङ्गानि क्रोडीकरोति विषयेभ्यः, विषयान्निवार्य[2] तदा तदा स्थिरप्रज्ञः । यद्वा इन्द्रियार्थेभ्यः प्रभृति इन्द्रियाणि आत्मनि संहरते विषयेन्द्रियात्मकं[3] सर्वम्[4] आत्मसात्कुरुते ॥ ६० ॥

ननु तपस्विनोऽपि कथं स्थितप्रज्ञशब्दो न प्रवर्तते? उच्यते—

---

1. S—विरहिता
2. S विषयेभ्यः विषयार्थस्यैव विषयान्निवार्य
3. K —न्द्रियादिकम्
4. B,N आसन्नं instead सर्वम्

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ६१ ॥

विषया इति । यद्यपि आहार्यैः रूपादिभिर्विषयैः संबन्धोऽस्य नास्ति, तथापि तस्य विषया अन्तःकरणगतमुपरागलक्षणं रसं वर्जयित्वा [एव] निवर्तन्ते । अतो नासौ स्थिरप्रज्ञः । रसं केचिदास्वाद्यं मधुरादिकमाहुः[1] । योगिनस्तु परमेश्वरदर्शनात् उपरागो न[2] भवति । अन्यस्य तु तपस्विनो नासौ निवर्तते॥६१

यततस्यापि हि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६२ ॥

यततस्यापीति । यत् यस्मात् तस्यापि तपस्विनो मन इन्द्रियैः ह्रियते । अथवा यततस्य सयत्नस्यापि । योगिना च मन एव जेतव्यमिति द्वितीयो निर्णीतः ॥ ६२ ॥

तानि संयम्य मनसा युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६३ ॥

तानीति । यः एवं मनसा इन्द्रियाणि नियमयति न स्वप्रवृत्त्या स एव स्थिरप्रज्ञः । स च मत्पर एव आसीत, मामेव चिदात्मानं परमेश्वरमभ्यस्येत्[3] ॥ ६३ ॥

ध्यायतो विषयान् पुंसः संगस्तेषूपजायते ।
संगात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६४ ॥

---

1. K omits this entire sentence
2. N omits न
3. B,N अभ्यसेत्

क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६५ ॥

ध्यायत इति । क्रोधादिति । तपस्विनो विषयत्याग एव विषयग्रहणे पर्यवस्यति । ध्यात्वा हि ते त्यजन्ते । ध्यात-काले एव च[1] संगादयः उपजायन्ते इति अनपायो[2] विषयत्यागः स्थिरप्रज्ञस्य [एव] ॥ ६४-६५ ॥

रागद्वेषविमुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६६ ॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६७ ॥

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६८ ॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६९ ॥

तस्माद्यस्य महाबाहो निगृहीतानि सर्वतः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ७० ॥

रागद्वेषेत्यादि प्रतिष्ठितेत्यन्तम् । यस्तु मनसो नियामकः स विषयान् सेवमानोऽपि न क्रोधादिकल्लोलैरभिभूयते इति स एव स्थितप्रज्ञो योगीति तात्पर्यम् ॥ ६६–७० ॥

---

1. S omits च
2. K अनुपायो

योगी च सर्वव्यवहारान् कुर्वाणोऽपि[1] लोकोत्तर इति विरूपयता परमेश्वरेण संक्षिप्यास्य स्वरूपं कथ्यते—

या निशा सर्वभूतानां तस्यां जगर्त्ति संयमी ।
यस्यां जाग्रति भूतानि सा रात्रिः पश्यतो मुनेः ॥ ७१ ॥

या निशेति । या सर्वेषां भूतानां निशा मोहिनी[2] माया तस्यां मुनिर्जागर्त्ति 'कथमियं हेया' इति । यस्यां च दशायां लोको जगर्त्ति नानाविधां[3] चेष्टां कुरुते, सा मुनेः रात्रिः यतोऽसौ व्यवहारं प्रत्यबुद्धः ।

एतदुक्तं भवति - येयं माया खलु, तस्या द्वे रूपे[4] मोहकत्वं[5] नाम रूपं सुखतन्त्व[6]ताभासनं च । तत्र लोकः प्राच्यं स्वरूपमस्या अपरामृश्यैव द्वितीयस्मिन् रूपे निबद्धस्मृतिरास्ते । योगी तु तद्विपरीतस्तदीयं मोहकत्वं तदुन्मूलनाय पश्यति । सुखतन्वतां च नाद्रियते[7], पश्यन् सम्यग्ज्ञानी । मिथ्याज्ञानोपघाताच्च सुखतन्वतानादरः[8] । [एवं च] पश्यत एव सा रात्रिरिति चित्रम् । विद्यायां वा बुध्यते[9] योगी, यत्र सर्वोऽपि[10] विमूढः; अविद्यायां त्वबुद्धः यत्र जनः प्रबुद्ध इत्यपि चित्रम् ॥७१॥

1. S omits अपि
2. K मोहनी
3. S विविधां
4. B,N omit द्वे रूपे
5. B,N मोहकत्वे
6. B,N तन्तु for तन्व hereinafter
7. N नाश्रीयते
8. S -तन्वतायां नादरः
9. S,K —यां चावधत्ते
10. S,B,N omit अपि

अत एव—

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७२॥

आपूर्यमाणमिति । योगी न कामार्थं बहिर्धावति, अपि तु इन्द्रियधर्मतया; तं[1] विषया अनुप्रविशन्तो न तरङ्गयन्ति नदीवेगा इवोदधिम् । एवं तृतीयो निर्णीतः ॥ ७२ ॥

विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः ।
निर्ममो निरहंकारो स शान्तिमधिगच्छति ॥ ७३ ॥

विहायेति । स योगी सर्वकामसंन्यासित्वात् शान्तिरूपं मोक्षमेति ॥ ७३ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ७४ ॥

॥ इति श्रीमद्भगवद्गीतायां द्वितीयोऽध्यायः ॥

एषेति । एषा असौ ब्रह्मसत्ता, यस्यां क्षणमात्रं स्थित्वा अवस्थितिं प्राप्य शरीरभेदात् परं[2] ब्रह्म आप्नोति। इति प्रश्नचतुष्टयं निर्णीतमिति ॥ ७४ ॥

॥ शिवम् ॥

1. B,N omit तं and read विषयानुप्रविशन्तो नतरां यान्ति (B न तरंगयन्ति)

2. S,B,N परमं

अत्र संग्रहश्लोकः—

अहो नु चेतसश्चित्रा गतिस्त्यागेन[1] यत्किल ।
आरोहयत्येव विषयाञ्छ्रयंस्तांस्तु परित्यजेत्[2] ॥ २ ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहे द्वितीयोऽध्यायः ॥

॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. ४-६ (व्या) एतच्चेत्यादिना फलविशेषाभिसन्धानमपि न संभवतीति दर्शयति ॥

श्लो. ८ (मू) अवाप्येति । अवाप्य स्थितस्य ममेति संबन्धः ॥

श्लो. ११ (मू) विसंज्ञ इति । सम्यक् ज्ञायते अनेन इति संज्ञं सम्यग्ज्ञानम्; तस्माद्विनिवृत्तः विसंज्ञः सम्यग्ज्ञानशून्य इत्यर्थः ॥

श्लो. १४ (व्या) न शोचति इति । अनेनेदं सूचितमिव—देहिन इति पद्ये चतुर्थपादे आचार्यः प्रायशः 'न शोचति' इति पपाठ, न तु 'न मुह्यति' इति यश्च सार्वत्रिकः पाठः ॥

श्लो. १५ (व्या) एतद्युक्तानिति । पूर्वोक्तावस्थाविशेषयुक्तान् इत्यर्थः । वक्ष्यति च समनन्तरं तथैव ॥

---

1. B,N गतिर्योगेन
2. B,N तामपरित्यजेत्

श्लो. १७ (व्या) भावः सत्ता ॥

श्लो. १९ (मू) नित्यस्येति। नित्यत्वं च ध्वंसाप्रतियोगित्वम् ।(व्या)स्थूलेत्यादि ।अनेन 'अन्तवन्त' इत्यस्यार्थो वर्णितो वेदितव्यः। विनाशिन इति। विशिष्टो नाश एषामित्यर्थः। वैशिष्ट्यं च स्थूलत्वप्रतिद्वंद्वि सूक्ष्मत्वम्। तदेव दर्शयति - प्रतिक्षणमित्यादिना। तथा च अन्तवन्तः विनाशिनः इत्यपौनरुक्त्यं बोध्यम् ॥

श्लो. २१ (व्या) न नेति द्वौ नञौ प्रकृतार्थं दृढीकुरुतः। तच्च दर्शयति अपि तु भूत्वैवेति। एवमुत्तरत्रापि ॥

श्लो. २४-२६ (व्या) तेन संबध्यते इत्यर्थः इतीदमधिकमनपेक्षमिव ॥

श्लो. २९ (व्या) यस्तावदित्यादि। यः पुरुषस्तावत् अस्य शोचनीयतया अभिमतस्य भावस्य विषये शोचकः शोचनकर्ता तं पुरुषं प्रति उद्दिश्य, एष भावः इत्याद्यर्थः। विचित्रस्वभावतयेति। तृतीयार्थः अवच्छिन्नप्रकारताकत्वं दर्शनेऽन्वेति ॥

श्लो. ३६ (मू) एषाम् इति काश्मीरपाठोऽत्र समादृतः ॥

श्लो. ४० (व्या) एषैव च यथा योगे कर्मकौशलायेति। अनेन च द्वयं सूचितमिव। प्रकृतगीताश्लोके द्वितीयपादे 'योगे यथा शृणु' इति पाठः प्रायश आचार्याभिमत इति; तथा सांख्ये योगे इति सप्तम्यौ निमित्तात् कर्मयोगे बोध्ये इति च ॥

श्लो. ४३-४५ (व्या) तयैवेति। मूले तच्छब्देन (श्लो. ४५) पूर्वोक्ता (श्लो. ४३) पुष्पिता वाक् परामृष्टा, तादृश-

वाचश्च तत्रैव प्रकृष्टवदनक्रियाकर्मत्वमुक्तमिति तस्या वस्तुतः कल्पितत्वमेव भगवदभिमतमिति कृत्वा तदर्थमाह - स्वयंकल्पितया वेदवाचा इति । तत्तदर्थवादानुरोधेन विधिवाक्यानि कल्पयन्त्यपि कर्मिण इति प्रसिद्धम् । फलनिश्चयत्वादिति । फलनिश्चयासत्त्वा-दिति विवक्षितमिव ॥

श्लो. ४६ (व्या) करणेनेति करणे तृतीया । विशेषेण इत्य-नेन विषयशब्दगतवीत्युपसर्गार्थमाह ॥

श्लो. ४८ (व्या) यत् अप्राथ्र्यमानं ज्ञानं नानिच्छोस्तत् इति । अत्र 'यत् प्रार्थ्यमानं फलं ज्ञातं, नानिच्छोस्तत्' इति; 'फलं न ज्ञानेच्छोस्तत्' इति वा; 'फलं नाविच्छोस्तत्' इति वा विवक्षितमिव प्रतिभाति ॥

श्लो. ५१ (व्या) हेतोरिति । तथा च बुद्धियोगात् इति मूले पञ्चमी 'विभाषा गुणेऽस्त्रियाम्' (*PA*,II,ii, 25) इत्यनेन बोध्येति भावः ॥

श्लो. ५४-५५ (व्या) अभिलष्यमाणस्येति । श्रोतव्यं श्रुतं चागमं कर्मठा अभिलष्यन्तेतमामिति प्रसिद्धमेतत् ॥

श्लो. ५६ (व्या) उक्तः, उक्तप्रायः । प्रयोगलक्षणमिति । प्रयोगः प्रकृष्टो योगः अवयवशक्तिसंबन्धः स एव लक्षणं ज्ञापकं यस्य तम् अर्थमिति । अवयवशक्तिमात्रबोधितमिति यावत् । अथ वा प्रकृष्टो योगः बुद्धियोगः यश्च प्रकृतः; स एव लक्षणं स्वरूपं यस्य सः; तमर्थमिति। बुद्धियोगयुक्तमिति पर्यवसितार्थः। अत एव स्थिरधीर्योगी इत्यपि वक्ष्यति ॥

श्लो. ५७ (व्या) रूढिश्चेत्यादि । अत्रेदमभिप्रेतमिव—'रूढिश्च नित्यमात्मरूढित्वम् । तस्मिंश्च सति - - - - - - योगिनो यः स्थितप्रज्ञशब्दः सोऽन्वर्थः, स चेत्थं युक्तः' इति ॥

श्लो. ६० (व्या) न चास्य पाचकवद्योगरूढत्वमिति । अत्र च 'न चास्य पङ्कजशब्दवद्योगरूढत्वम्; अपि तु पाचकपदवत् यौगिकत्वम्' इति विवक्षितमिति प्रतिभाति । अत एव यदा यदा इत्यादि वक्ष्यमाणं संगच्छते । अत्र च ---

> 'यदि क्रियासंबन्धनिमित्तः कारकशब्दप्रयोगः, पचत्येव पाचकशब्दः प्रवर्तते, नापाक्षीत् इति पाचकः, न पक्ष्यतीति पाचकः ।'

इति न्यायवार्तिकवाक्यानि (II, i, 16) अनुसंधेयानि ।

इन्द्रियार्थेभ्यः प्रभृति इति । तथा च प्रभृतिशब्दाभावेऽपि तदर्थस्य सत्त्वात् तत्प्रयुक्ता मूले इन्द्रियार्थेभ्य इति पञ्चमी इति भावः । अत एव 'अपादाने पञ्चमी' (*PA*,II,iii,28) इति सूत्रे महाभाष्ये 'यतश्चाध्वकालनिमानं ततः पञ्चमी' इति वार्त्तिकप्रत्याख्यानावसरे 'इदमत्र प्रयोक्तव्यं सत् न प्रयुज्यते–कार्त्तिक्याः प्रभृति आग्रहायणी मासे' इत्युक्तम् ।

सर्वमिति । तथा च एतद्द्वितीयव्याख्यानुरोधेन मूले सर्वत इति सार्वविभक्तिकस्तसिरिति आचार्याभिप्रेतमिव प्रतिभाति ॥

श्लो.६१ (मू) दृष्ट्वेति । परं दृष्ट्वा वर्तमानस्य अस्य रसोऽपि निवर्तते इति योजना ॥

श्लो. ६२ (व्या) यत्तस्येति—यती प्रयत्ने इति भौवादिकस्य धातोरकर्मकत्वात् गत्यर्थाकर्मकेत्यादिना(*PA*,III,iv, 72) कर्तरि क्तः, प्रयतत इत्यर्थः । तदेवाह सयत्नस्येति ॥

श्लो. ७१ (व्या) द्वे रूपे इत्यादि । मोहकत्वं नाम एकं रूपं, सुखतन्त्रताभासनं नाम द्वितीयं च रूपमित्यर्थः ॥

संग्रहश्लोके आरोहत्येवेत्यादि । अथवा 'आरुह्यादेव विषयान्, श्रयत् तांस्तु' इति युज्यतेतराम् । श्रयदिति चेतोविशेषणम् । विषयाणां त्यागेन तानारुह्यात् चेतः, श्रयणेन तु तानेव परित्यजेत् इति अतीव चित्रा गतिश्चेतसः, अहो! इति तात्पर्यम् ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां द्वितीयोऽध्यायः ॥

# तृतीयोऽध्यायः

अर्जुन उवाच—

ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥

ज्यायसीति । व्यामिश्रेणेति । कर्म उक्तं ज्ञानं च । तत्र न द्वयोः प्राधान्यं युक्तम्, अपि तु ज्ञानस्य । तद्बलेन क्षपणीयत्वं यदि कर्मणां 'बुद्धियुक्तो जहातीमे' (II, 52) इत्यादिनयेन मूलत एव, तर्हि[1] कर्मणां[2] किं प्रयोजनमिति प्रश्नाभिप्रायः ॥१-२॥

श्रीभगवानुवाच—

लोकेऽस्मिन् द्विविधा निष्ठा पुरैकोक्ता (?) मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥

श्रीभगवांस्तूत्तरं ददाति लोकेऽस्मिन् इति । लोके एषा द्वयी गतिः प्रसिद्धा—सांख्यानां ज्ञानं प्रधानम्, योगिनां च कर्मेति । मया तु सा एकैव निष्ठा उक्ता ज्ञानक्रियामयत्वात् संवित्तत्त्वस्येति भावः ॥ ३ ॥

1. K तत्
2. S,K कर्मणा-

तथा हि—

न कर्मणामनारंभान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥

न कर्मणामिति । न हीति । ज्ञानं कर्मणा रहितं न भवति; कर्म च कौशलोपेतं ज्ञानरहितं न भवति; इत्येकमेव वस्तु ज्ञानकर्मणी । तथाचोक्तम्

'न क्रियारहितं ज्ञानं न ज्ञानरहिता क्रिया ।
ज्ञानक्रियाविनिष्पन्न आचार्यः पशुपाशहा ॥' इति

तस्मात् ज्ञानान्तर्वर्ति कर्म अपरिहार्यम् । यतः परवश एव, कायवाङ्मनसां परिस्पन्दात्मकत्वात् अवश्यं किञ्चित्करोति ॥ ४-५ ॥

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मूढाचारः स उच्यते ॥ ६ ॥

कर्मेन्द्रियाणीति । कर्मेन्द्रियैश्चेन्न करोति, अवश्यं [1]तर्हि मनसा करोति; प्रत्युत [सः] मूढाचारः[2], मानसानां कर्मणामत्यन्तमपरिहार्यत्वात् ॥ ६ ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥

---

1. S omits तर्हि
2. The expressions मूढाचारः and मिथ्याचारः are found hereinafter interchanged in the MSS.

यस्त्विति । कर्मसु क्रियमाणेषु न ज्ञानहानिः । मनसोऽव्यापारे यन्त्रपुरुषवत् कर्मणः क्रियमाणत्वात् ॥ ७ ॥

अतः—

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥ ८ ॥

नियतमिति । नियतं शास्त्रीयं कर्म कुरु । शरीरयात्रामात्रस्यापि कर्माधीनत्वात् ॥ ८ ॥

यतः—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥

यज्ञार्थात् इति । यज्ञार्थात् अवश्यकरणीयात् अन्यानि कर्माणि बन्धकानि । अवश्यकर्तव्यं[1] मुक्तफलसंगतया क्रियमाणं न फलदम् ॥ ९ ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

सहेति । प्रजापतिः परमात्मा प्रजाः सहैव कर्मभिः ससर्ज । उक्तं च[2] तेन 'प्रजानां कर्मभ्य एव प्रसवः सन्तानः । एतान्येव च इष्टं संसारं मोक्षं वा दास्यन्ति; संगात्संसारं, मुक्तसंगत्वान्मोक्षम्' [इति] ॥ १० ॥

1. B omits अवश्यकर्तव्यम्
2. N omits उक्तं च

य(त)त्र येषां मोक्षप्राधान्यं तैरेव विषयाः सेव्या इत्युच्यते—

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

देवानिति । देवाः क्रीडाशीलाः[1] इन्द्रियवृत्तयः करणेश्वर्यो देवता रहस्यशास्त्रप्रसिद्धाः, ताः अनेन कर्मणा तर्पयत, यथासंभवं विषयान् भक्षयतेत्यर्थः । तृप्ताश्च सत्यस्ता वो[2] युष्मान् आत्मन एव स्वरूपमात्रोचितान् अपवर्गान्[3] भावयन्तु, स्वात्मस्थितियोगत्वात् । एवमनवरतं [4]व्युत्थानसमाधिसमयपरम्परायाम् इन्द्रियतर्पणतदात्मसाद्भावलक्षणे[5] परस्परभावने सति शीघ्रमेव परमं श्रेयः परस्परभेदविगलनलक्षणं ब्रह्म प्राप्स्यथ ॥ ११ ॥

न केवलमित्थमपवर्गे, यावत्सिद्धिलाभेऽपि अयं मार्गः [अभ्यसनीय] इत्याह—

इष्टान् भावान्(?) हि वो देवाः दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥ १२ ॥

इष्टानिति । यज्ञतर्पितानि हि इन्द्रियाणि स्थितिं बध्नन्ति यत्रक्वापि ध्येयादौ इति । अत एव तद्व्यापरे सति तेषां विषयाणां स्मृतिसंकल्पध्यानादिना भावाः विषयाः इन्द्रियैरेव

1. K क्रीडनशीलाः
2. S सत्यो वो
3. S-चितापवर्गान्
4. S —रतव्युत्थान—
5. B —सद्भाव—

दत्ताः। यदि तेषामेवोपभोगाय विषया[1] न दीयन्ते तर्हि स्तेनत्वं चौर्यं स्यात्, छद्मचारित्वात्। उक्तं हि पूर्वमेव भगवता 'मूढाचारः स उच्यते' (II, 6) इति। अतोऽयं वाक्यार्थः – यः सुखोपायं सिद्धिम् अपवर्गं वा प्रेप्सति, तेन इन्द्रियकौतुकविवृत्तिमात्रफलतयैव भोगा यथोपनतमासेव्या इति ॥ १२ ॥

यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥

यज्ञशिष्टेति। अवश्यकर्तव्यतारूपशासनमहिमायातान् भोगान् येऽश्नन्ति अवान्तरव्यापारमात्रतया अत एव च पृथक्फलत्वाभावाङ्गतया; अथ च इन्द्रियात्मकदेवगणतर्पणलक्षणयज्ञादवशिष्टम् अन्तःसारस्वात्मस्थित्यानन्दलक्षणविघसं येऽश्नन्ति, तत्रारूढा[2] भवन्ति; तदुपादेयोपायतया[3] तु विषयभोगं वाञ्छन्ति, ते सर्वकिल्बिषैः शुभाशुभैः मुच्यन्ते। ये त्वात्मकारणादिति– अविद्यावशात् स्थूलमेव विषयभोगं परत्वेन[4] मन्वानाः 'आत्मार्थमिदं वयं कुर्मः' इति कुर्वते, त एवाघं शुभाशुभात्मकं लभन्ते ॥ १३ ॥

अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसंभवः।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥

---

1. S.K omit विषयाः
2. B तत्रामूढाः
3. S तत्रोपादे—
4. S –भोगपरत्वेन

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥

अन्नादिति । कर्मेति । अन्नात् अविभागभोग्यस्वभावात् कथंचित् मायाविद्याकालाद्यनेकापरपर्यायात्[1] भूतानि विचित्राणि भवन्ति । तच्च अन्नं पर्जन्यात् अविच्छिन्नसंवित्स्वभावात् आत्मनः; भोक्तृतन्त्रात्मलाभत्वात् भोग्यतायाः । स च पर्जन्यो भोक्ता यज्ञात् [भोगक्रियात्मनः] ; भोगक्रियायत्तत्वात् भोक्तृत्वस्य । भोगक्रिया च कर्मणः क्रियाशक्तिस्वातन्त्र्यबलात् । तच्च स्वातन्त्र्यम् [2]अविच्छिन्नमपि अनवच्छिन्नानन्तस्वातन्त्र्यपूर्णसमुच्चलन्महैश्वरभावपरमात्मब्रह्मणः[3] संस्पर्शवशात् । [4]तच्च उच्चलदच्छानाच्छादितैश्वर्यं[5] ब्रह्म अक्षरात् प्रशान्ताशेषैश्वर्यतरङ्गात् संविन्मात्रात् । इत्येवं सुव्यवस्थितो[6] यज्ञः षडरं चक्रं वाहयन्, तत्र[7] अरात्रयसंधानादपवर्गम् अरात्रयतन्त्रणात् व्यवहारमासूत्रयति इति विद्याविद्योल्लासतरंगसुभगं ब्रह्म[8] यज्ञे एव प्रतिष्ठितम् ।

---

1. S,B,N -विद्याप्रकृतिकाला-
2. S अवच्छिन्नमपि अवच्छिन्नस्यापि अनवच्छिन्नानन्त-
3. S,K —ब्रह्मसंस्पर्श—
4. B omits तच्च
5. B,N —इच्छादितैश्वर्यम्
6. S -स्थितोऽयम् भोगक्रियायाम्
7. K omits तत्र; S,B,N substitute तत्
8. B-तरङ्गं ब्रह्म

अन्ये तु अन्नं तावद्वीर्यलोहितक्रमेण भूतकारणम्; अन्नं च वृष्टिद्वारेण पर्जन्यात् सोऽपि 'अग्नौ प्रास्ताहुतिः सम्यक्'[1] इति आदित्यमेति। ततो वृष्टिर्यज्ञात्; यज्ञः क्रियातः; सा च ज्ञानपूर्विका; ज्ञानमक्षरात् इति।

अपरे तु अन्नं अद्यमानं विषयपञ्चकम् [तत्] आश्रित्य भूतानि इन्द्रियाणि; विषयाश्चात्मनः स्फुरितरूपाः। अत आत्मैव विषयोपभोगेन पोष्यते। अतश्च सर्वगतं[2] ब्रह्म कर्मणि प्रतिष्ठितं तन्मयत्वात् तस्य [इति] ॥ १४-१५ ॥

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

एवमिति। यस्तु एवं नाङ्गीकरोति स पापमयः। [3]यतः स इन्द्रियेष्वेव रमते, नात्मनि ॥ १६ ॥

यश्चात्मरतिरेव स्यात् आत्मतृप्तश्च मानवः।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥

---

1. S,B omit सम्यक्; K omits the entire quotation.
2. S अतः सर्वगम्
3. N अतः

[1]तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥

यश्चेत्यादि पूरुष इत्यन्तम् । आत्मरतेस्तु कर्म इन्द्रियव्यापारतयैव कुर्वतः करणाकरणेषु समता । अत एव नासौ भूतेषु किंचिदात्मप्रयोजनमपेक्ष्य निग्रहानुग्रहौ करोति, अपि तु 'करणीयमिदम्' इत्येतावता । तस्मादसक्त एव करणीयं कर्म कुर्यात् ॥ १७–१९ ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हति ॥ २० ॥

कर्मणैवेति । तदत्र [कर्म] कुर्वतामपि सिद्धौ जनकादयो दृष्टान्ताः ॥ २० ॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं प्रवर्तेऽथ च कर्मणि ॥ २२ ॥

यद्यदाचरतीति । न मे इति । प्राप्तप्रापणीयस्य परिपूर्णमनसोऽपि कर्मप्रवृत्तौ लोकानुग्रहः प्रयोजनमित्यत्र श्रीभगवान् आत्मानमेव दृष्टान्तीकरोति ॥ २१-२२ ॥

---

1. S,K give this verse later as verse 24. K gives the corresponding sentence of the commentary तस्मादसक्त एव etc., after आत्मानमेव दृष्टान्तीकरोति, the commentary on verses 21-22.

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तेरन्मनुष्याः पार्थ सर्वशः ॥ २३ ॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ताहमुपहन्यामिमाः प्रजाः ॥ २४ ॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥

यदीत्यादि लोकसंग्रहमित्यन्तम् । किं च विदितवेद्यः कर्म चेत् त्यजेत्, तत् लोकानां दुर्भेद एव, एकप्रसिद्धपक्षशिथिलितास्थाबन्धत्वेनाप्ररूढिलक्षणो जायेत[1] । यतः[2] कर्मवासना च न मोक्तुं शक्नुवन्ति ज्ञानधारां च नाश्रयितुम्; अथ च शिथिलीभवन्ति ॥ २३-२५ ॥

यतस्ते न[3] सम्यग्ज्ञानेन पूताः अतो बुद्धेर्भेदनं [4]विचालनं तेषां परमोऽयमनर्थ इत्यनुग्रहाय भेदयेन्न धियमेषाम्; तदाह[5]–

न बुद्धिभेदं जनयेदज्ञानां कर्मसंगिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥

न बुद्धीति । स्वयं चैवं बुद्ध्यमानः कर्माणि कुर्यात्; न च लोकानां बुद्धिं भिन्द्यात् ॥ २६ ॥

---

1. S,B,K जायते
2. S omits यतः
3. S –स्ते सम्य–
4. B,N विगलनम्
5. S एतदाह

अज्ञानामित्युक्तम् । तदज्ञत्वं दर्शयति—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि भागशः ।
अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ २७ ॥

प्रकृतेरिति । प्रकृतिसंबन्धिभिः गुणैः सत्त्वाद्यैः किल कर्माणि क्रियन्ते । मूढश्च 'अहं कर्ता' इत्यध्यवस्य[1] मिथ्यैव आत्मानं बध्नाति ॥ २७ ॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणा गुणार्थे वर्तन्ते इति मत्वा न सज्जते ॥ २८ ॥

तत्त्ववित्त्विति । गुणकर्मविभागवित्तु 'प्रकृतिः करोति मम किमायातम्' इत्यात्मानं मोचयति ॥ २८ ॥

कर्मसंगिनामित्युक्तम् । [2]तत् कर्मसंगित्वं[3] दर्शयति—

प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥ २९ ॥

प्रकृतेरिति । प्रकृतिसंबन्धिभिर्गुणैः सत्त्वाद्यैः[4] कृतेषु कर्मसु मूढाः सज्जन्ति[5] सत्त्वादिगुणमाहात्म्यात् ॥ २९ ॥

'तस्माद्युक्तः सन् जुषेत कर्माणि' इत्युक्तं, तत्र [तत्] कथमिति स्फुटयति—

---

1. S omits अध्यवस्य
2. B,N omit तत्
3. S omits कर्मसंगित्वम्
4. S,B omit सत्त्वाद्यैः
5. B मज्जन्ति

मयि सर्वाणि कर्माणि सन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥

मयीति । मयि सर्वाणि[1] कर्माणि 'नाहं कर्ता' इति सन्यस्य 'सर्वतन्त्रः परमेश्वर एव सर्वकर्ता नाहं कश्चित्' इति निश्चित्य लोकानुग्रहं चिकीर्षुः लोकाचारं युद्धात्मकम् अनुतिष्ठ ॥ ३० ॥

ये मे मतमिदं नित्यमनुवर्तन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते सर्वकर्मभिः ॥ ३१ ॥
ये त्वेतदभ्यसूयन्तो नानुवर्तन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥ ३२ ॥

ये म इति । ये त्वेतदिति । एतच्च मतमाश्रित्य यः कश्चित् यत्किंचित् करोति तत्तस्य न बन्धकम् । एतस्मिंस्तु ज्ञाने ये न श्रद्धालवः[2] ते विनष्टाः, अविरतं जन्ममरणादि[3]भयभावितत्वात् ॥ ३१-३२ ॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥

सदृशमिति । योऽपि च ज्ञानी न तस्य व्यवहारे भोजनादौ विपर्यासः कश्चित् । अपि तु सोऽपि सत्त्वाद्युचितमेव चेष्टते एवमेव जानन् । यतः[4] भूतानां पृथिव्यादीनां प्रकृतौ

1. S मयि स्थित्वा सर्वाणि
2. B श्रद्धालवाः
3. S omits आदि
4. B,N अतः

विलयः आत्मा च अकर्ता नित्यमुक्त इति कस्य जन्मादिनिग्रहः? ॥ ३३ ॥

कथं तर्हि बन्धः? [1]इत्थमित्युच्यते ।

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत् तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

श्रेयान्स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मोदयादपि ॥ ३५ ॥

इन्द्रियस्येति । श्रेयानिति । संसारी च प्रतिविषयं रागं द्वेषं च गृह्णाति; यतः कर्माणि आत्मकर्तृकाण्येव विमूढत्वादभिमन्यते इति सममपि भोजनादिव्यवहारं कुर्वतोः ज्ञानिसंसारिणोरस्त्ययं विशेषः । अयं नः सिद्धान्तः सर्वथा मुक्तसंगस्य स्वधर्मचारिणो नास्ति कश्चित् पुण्यपापात्मको बन्धः । स्वधर्मो हि हृदयादनपायी स्वरसनिरूढ[2] एव, न तेन कश्चिदपि रिक्तो जन्तुर्जायते इत्यत्याज्यः ॥ ३४-३५ ॥

अर्जुन उवाच—

अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छमानोऽपि बलादाक्रम्येव नियोजितः ॥ ३६ ॥

अथेति । पापं पापतया विदन्नपि जनः कथं तत्र प्रवर्तते इति प्रश्नः । अस्य प्रश्नस्योत्था[प]ने अयमाशयः । स्वधर्मो

---

1. N omits इत्थम्; K omits इति
2. B,N,K निगूढः

यदि स्वहृदयादनपायि[1]त्वादत्याज्यः कथं [2]तर्ह्यधर्माचरणमेषाम्? इति कोऽयं स्वधर्मो नाम येनारिक्तो[3] जन्तुः? इत्युक्तं भवति॥३६

अत्र उत्तरं 'सत्यपि धर्मे हृदिस्थे आगन्तुकावरणकृतोऽयं[4] विप्लवो न तु तदभावकृतः'[5] इत्याशयेन

श्रीभगवानुवाच—

काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥

काम एष इति । द्वाभ्यामेतच्छब्दाभ्यामनयोरत्यन्ता-वैषम्यं[6] सूच्यते । एतौ च कामक्रोधौ नित्यसंबन्धिनौ अन्योन्याविनाभावेन वर्तेते इत्येकरूपतयैव व्याचष्टे । एष च महस्य सुखस्य अशनः ग्रासकारकः महतः पापस्य हेतुत्वाच्च क्रोध एव पापदायी । एनं च वैरिणं प्राज्ञो जानीयात् ॥ ३७ ॥

ननु अर्थाद्युपघातकं ज्ञातस्वरूपं च वस्तु हातुं सुशकं भवेदित्यभिप्रायेण

अर्जुन उवाच—

भवत्येष कथं कृष्ण कथं चैव विवर्धते ।
किमात्मकः किमाचारः तन्ममाचक्ष्व पृच्छतः ॥ ३८ ॥

---

1. S हृदयानपायि-
2. S omits तर्हि
3. S,B येन न रिक्तो; N येनानतिरिक्तो ।
4. N -कावरणकृ—
5. N तदभावप्लुतः
6. S अत्यन्तवैषम्यम्

भवत्येष इति । अस्य चोत्पत्तौ किं कारणम् ? वर्धने च को हेतुः ? स्वरूपं चास्य कीदृक् ? उत्पन्नों रूढीभूतश्च[1] किमाचरति? किं करोति ? इति प्रश्नाः ॥ ३८ ॥

अत्रोत्तरम्

श्रीभगवानुवाच—

एष सूक्ष्मः परः शत्रुः देहिनामिन्द्रियेषु ह (?)।
सुखतन्त्र इवासीनो मोहयन् पार्थ तिष्ठति। ३९ ॥

एष इति । एष तावत्सूक्ष्मः उत्पत्तिसमये अलक्ष्यः इन्द्रियेषु । एवं च वर्तमानः सुखं तन्त्रयितुमिवोत्पद्यते । वस्तुतस्तु दुःखमोहमयः तामसत्वात् । अत एव 'मोहयन्' ॥ ३९ ॥

कामक्रोधमयो घोरः स्तम्भहर्षसमुद्भवः ।
अहंकारोऽभिमानात्मा दुस्तरः पापकर्मभिः ॥ ४० ॥
हर्षमस्य निवर्त्यैष शोकमस्य ददाति च ।
भयं चास्य करोत्येष मोहयंस्तु मुहुर्मुहुः ॥ ४१ ॥

कामेति । हर्षमिति । स्तंभः कुलाद्यभिमानः; तत्कृतो[2] यो हर्षः 'अहमीदृशः' इति । अत एवाह अहंकार इति । अत एव च गर्वाद्वर्धते, अभिमानस्वभावः, सुखबुद्धिप्रकारेण च जायते । इति त्रयः प्रश्नाः परिहृताः ॥ ४०-४१ ॥

स एष कलुषः क्षुद्रश्छिद्रप्रेक्षी धनञ्जय ।
रजःप्रवृत्तो मोहात्मा मनुष्याणामुपद्रवः ॥ ४२ ॥

---

1. B,N,K (n) दृढीभूतश्च
2. N तत्प्लुतो

स एष इति । छिद्राणि प्रेक्षते 'अमुना छिद्रेणास्य इहलोक-परलोकौ नाशयामि' इति । तथा च मोक्षधर्मेषु—

यत्क्रोधनो यजते यद्ददाति यद्वा तपस्तप्यते यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं मोघः श्रमो भवति क्रोधनस्य[1] ॥

इति (म. भा. शान्ति., मोक्ष., अध्याय २८८, श्लो. २७) रजसः प्रवृत्तः तमोरूप इत्यर्थः ॥ ४२ ॥

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनायमावृतः ॥ ४३ ॥

धूमेनेति । दृष्टान्तत्रयेण दुरुपसर्गत्वम्,[2] अकार्यकरत्वं, जुगुप्सास्पदत्वं च उक्तम् । अयमिति आत्मा ॥ ४३ ॥

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ४४ ॥

आवृतमिति । कामरूप इच्छायां यतश्चरति । अनलेन च अग्निनेव पूरयितुमशक्येन, दृष्टादृष्टद्वयदाहकत्वात् ॥ ४४ ॥

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनाम् ॥ ४५ ॥

इन्द्रियाणीति । आदाविन्द्रियेषु [व्यापृतेषु] सत्सु तिष्ठति । यथा चक्षुषा शत्रुः दृष्टः इन्द्रियप्रदेशे एव क्रोधमात्मनो जनयति ।

1. B,N भवति हि क्रोधनस्य
2. K दुरुपसर्पत्वम्

ततो मनसि संकल्पे; ततो बुद्धौ निश्चये एतद्द्वारेण मोहं जनयन् ज्ञानं नाशयति ॥ ४५ ॥

अस्य निवारणोपायमाह—

तस्मात् त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
पाप्मानं प्रजहिह्येनं ज्ञानविज्ञाननाशनम् ॥ ४६ ॥

तस्मादिति। तस्मादादौ इन्द्रियाणि नियमयेत्। क्रोधादिकं इन्द्रियेषु प्रथमं न गृह्णीयात्। ज्ञानं ब्रह्म[ज्ञानं] विज्ञानं च भगवन्मयीं क्रियां नाशयति यतः[1], अतः[2] पाप्मानं[3] क्रोधं त्यज। अथवा ज्ञानेन मनसा विज्ञानेन बुद्ध्या च नाशनं वारणं कृत्वा इति क्रियाविशेषणम्। इन्द्रियेषु उत्पन्नं संकल्पे न गृह्णीयात् संकल्पितं वा न विश्निनुयात् इति तात्पर्यम् ॥ ४६ ॥

अत्र युक्तिं श्लोकद्वयेनाह[4]—

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ४७ ॥

एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४८ ॥

॥ इति श्रीमद्भगवद्गीतायां तृतीयोऽध्यायः ॥

---

1. B,N,K हि, यतः
2. S omits अतः
3. S,B पापम्
4. S omits श्लोकद्वयेन

इन्द्रियाणीति । एवमिति । यत 'इन्द्रियाणि शत्रुलक्षणात् विषयात् अन्यानि, तेभ्यश्चान्यत् मनः, तस्मादपि बुद्धेर्व्यतिरेकः, बुद्धेरपि यस्यान्यस्वभावत्वं स आत्मा । एवमिन्द्रियोत्पन्नेन क्रोधेन कथं मनसः बुद्धेरात्मनो वा क्षोभ' इति पर्यालोचयेत् इत्यर्थः ।

रहस्यविदां त्वयमाशयः[1] ---बुद्धेः यः परत्र वर्तते परोऽहंकारः 'सर्वमहम्' इत्यभेदात्मा स खलु परमोऽभेदः । अत एव च परिपूर्णस्य खण्डनाभावात् न क्रोधादय उत्पद्यन्ते[2] । अतः परमहंकारं परमोत्साहं संविदात्मकं[3] गृहीत्वा क्रोधमविद्यात्मानं शत्रुं जहि इति ॥ ४७-४८ ॥

॥ शिवम् ॥

अत्र संग्रहश्लोकः —

धनानि दारान् देहं च योऽन्यत्वेनाधिगच्छति[4] ।
किं नाम तस्य कुर्वन्ति क्रोधाद्याश्चित्तविभ्रमाः ॥

इति श्रीमहामाहेश्वराचार्यवर्याभिनवगुप्तपादविरचिते
श्रीमद्भगवद्गीतार्थसंग्रहे तृतीयोऽध्यायः ॥

---

1. N ह्ययमाशयः
2. S,B,N उदयन्ते
3. K परोत्साहसंवि-
4. S नानुगच्छति

॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. ३ (व्या) मया तु सा एकैव निष्ठा उक्ता इति। अनेनेदं सूचितमिव—प्रकृतगीतापद्ये द्वितीयपादं प्रायशः 'पुरैकोक्ता मयानघ' इति तत्समानमन्यद्वा आचार्यः पपाठेति। रामकण्ठोऽपि व्याचख्यौ '- - - - मया एकैव निष्ठा उक्ता' इति। आनन्दवर्धनश्च 'द्विविधा द्वौ विधौ साधनप्रकारौ यस्याः सा एकैव प्रकारद्वयाख्या मयोक्ता इत्यन्वयः' इत्याह। परन्तु 'पुरा प्रोक्ता मयानघ' इत्येव सर्वत्र पाठो दृश्यते। अत्रेदं बोध्यम्—द्विविधा निष्ठा एकैवेति कुत्रोक्तं भगवता पूर्वमिति न स्पष्टीकृतमाचर्येण। अथवा द्वितीयाध्यायस्थचत्वारिंशः श्लोको मनसि कृतस्तेन, यत्र च 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे यथा शृणु' इति पाठमादृत्य व्याख्यातं तेन॥

श्लो. १२ (अ) अपवर्ग –लाभे इति सप्तमीद्वयं 'चर्मणि द्वीपी हतः' इत्यादाविव निमित्तात् कर्मयोगे बोध्यम्। तथा च अपवर्गाय, तथा यावत्यः सिद्धयः तावतीनां लाभाय च इत्यर्थः।

(व्या) भावा विषया इति। अनेनेदं ज्ञायते यत् प्रकृतगीताश्लोकप्रथमपादे 'इष्टान् भावान्' इति पपाठेवाचार्यः इति। रामकण्ठस्तु 'इष्टान् कामान्' इति पठतीव। सार्वत्रिकपाठस्तु 'इष्टान् भोगान्' इत्येव। सुखोपायमिति। क्रियाविशेषणमिदं प्रेप्स्यति इत्यनेनान्वेति॥

श्लो. १३ (व्या) अवश्यकर्तव्यतारूपशासनेत्यादि- मूलस्थशिष्टशब्दो विधिविहितमाह, अत एवं व्याख्या। यज्ञपदमवश्यकर्तव्यं यथा बोधयति तथोपादितं पूर्वमेव। शिष्टपदमवशिष्टार्थकमपि संभवति इत्यतो व्याख्यानान्तरमाह - अथ चेत्यादिना। आत्मकारणादिति इति। इति शब्दप्रदानपूर्वकम् अत्र व्याख्यातुराचार्यस्यायमाशयः — 'आत्मकारणात्' इति पदं तादृशाकारकज्ञानपरमिति। तादृशज्ञानस्य कारणं विशदयति अविद्यावशात् इत्यादिना। उक्तज्ञानस्वरूपमभिनीय दर्शयति आत्मार्थमिदं कुर्मः इति॥

श्लो. १४-१५ (व्या) मायाविद्येत्यादि। माया विद्या इति च्छेदः।

अनवच्छिन्नेत्यादि। अत्र अनवच्छिन्नत्वस्य अनन्तत्वस्य च स्वातन्त्र्यविशेषणत्वे प्रयोजनाभावः; स्वातन्त्र्यम् अविच्छिन्नमपि इत्यनेनैव गतप्रायत्वात्, अविच्छिन्नमपि इति अपिशब्दद्योतितविरोधस्य सम्यक् आञ्जस्यानुपपत्तेश्च। एवं च अवच्छिन्नानन्तेति विवक्षितं स्यात् इति भाति। अवच्छिन्ना देशतः कालतो व्यक्तितश्च ये अनन्ताः असंख्याका भावाः; तेषु विषये स्वातन्त्र्येण पूर्णमिति। इदं च सामानाधिकरण्येन ब्रह्मणि अन्वेति। समुच्चलन् महेश्वरभावो यस्य तस्य परमात्मनो ब्रह्मण इत्यर्थः। अथवा अनवच्छिन्नम् इति च स्वतन्त्रतया ब्रह्मविशेषणम्। अनवच्छिन्नम् अनन्तेषु स्वातन्त्र्यपूर्णं च यत् ब्रह्म इत्यन्वयः। महेश्वरभाव इति सदाशिवभावस्याप्युपलक्षणम्, उभयोः समान-

रूपत्वात् प्रायशः समानयोगक्षेमत्वाच्च । समुच्चयवत्सदाशिव-महेश्वरभावेति वा विवक्षितम् । अधिकमन्यत्र ।

अग्नौ प्रास्ताहुतिः इत्यादि ।

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥

इति मनुस्मृतौ (III, 76) दर्शितरीत्या आदित्यमेति इत्यर्थः ।

श्लो. २६ (अ) परमोऽयमनर्थ इत्यनुग्रहाय इति । तदुक्तं मधुसूदनसरस्वतीभिरस्मिन्नेव प्रकरणे—

अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ।
महानिरयजालेषु स तेन विनियोजितः ॥ इति

(मू) जोषयेदिति । जुष परितर्कणे परितर्पणे वा चुरादिः । परितर्कणं, हिंसा; परितर्पणं, परितृप्तिक्रिया ॥

श्लो. २८ (व्या) विभागेति । विभज्यते पदार्थः अनेनेति विभागः विभाजकधर्मः ॥

श्लो. ३० (अ) जुषेतेति । जुषधातोः धृषाद्यन्तर्गतत्वात् चुरादिप्रयुक्तणिज्विकल्पः ॥

श्लो. ३३ (व्या) एवमेव जानन् इति । विवक्षितज्ञानस्याकारं दर्शयति यत इत्यादिना निग्रह इत्यन्तेन । अयं च ज्ञानाकारः प्रकृतगीताश्लोकोत्तरार्धे दर्शित इत्यभिप्रायः । तथा चैतादृशज्ञानवानपि ज्ञानी स्वशरीरारंभक-भूतप्रकृतेः सत्त्वादेरनुगुण-

मेव भोजनादौ लौकिके व्यवहारे प्रवर्तते इति हृदयं प्रकृत-श्लोकस्येति रमणीयः पन्था आचार्योपदर्शितः । श्रीशङ्कराचार्य-भास्कररामकण्ठादयस्तु अस्य पद्यस्याज्ञविषयत्वम् अर्धप्रबुद्ध-विषयत्वं वेत्यभिप्रेत्य व्याचख्युः ॥

श्लो. ३७ (व्या) महस्य इति । मह इत्यकारान्तो यद्यपि उत्सवार्थकः, 'मह उद्धव उत्सवः' इत्यमरात् (I, vii, 38) । तथापि उत्सवजन्ये सुखे लक्षणा इत्याशयेन व्याचष्टे महस्य सुखस्य इति । 'महतः सुखस्याशनः' इत्यपपाठ इव; 'महदशन' इत्यापत्तेः; महच्छब्दस्य सुखार्थकत्वाप्रसिद्धेश्च ।

महतः पापस्य हेतुत्वात् इति । तथा च महत् पाप्म यस्मात् स महापाप्मा इति विग्रहः ॥

श्लो. ३९ (व्या) इन्द्रियेष्विति । इदं चैवं ज्ञापयितीव-प्रकृतगीतापद्ये द्वितीयपादे इन्द्रियेषु इत्येव आचार्यः पपाठेव इति । रामकण्ठाद्यभिमतपाठस्तु इन्द्रियैः सह इति । वर्तमानः प्रवर्त-मानः ॥

श्लो. ४१ (मू) मोहयंस्तु इति । तुः एवार्थे ॥

श्लो. ४५ (व्या) यथा चक्षुषा इत्यादि । यथा चक्षुषा शत्रौ दृष्टे इन्द्रियप्रदेशे एव क्रोध आत्मानं जनयति इति तात्पर्यार्थः ।

मोहं जनयन् ज्ञानं नाशयति इति । तथा च मूले आवृत्य इत्यनेन ज्ञानावरणमोहनयोः पूर्वापरकालिकत्वमविवक्षितम्;

वस्तुतस्तयोः समानकालिकत्वात् इति दर्शितं भवति । अथवा ज्ञानं नाशयति इति शेषपूरणम्; ज्ञानमावृत्य मोहं जनयन्नेव ज्ञानं नाशयत्यपि इत्यत्र तात्पर्यम् ॥

श्लो. ४६ (मू) प्रजहिहि इति । प्रपूर्वकात् ओ हाक् त्यागे इति जुहोत्यादेर्धातोः लोटि मध्यमपुरुषैकवचने 'ईहल्यघोः' 'जहातेश्च' (*PA*, VI, iv,113, 116) इति वैकल्पिके ईत्वे प्रजहिहि प्रजहीहि इति रूपद्वयम् । प्रजहिहि इत्येकपदपाठ एवाचार्याभिप्रेतः । अत एव त्यज इति न गृह्णीयात् इति चार्थं वर्णयति । यदि प्रजहि हि इति विभागोऽभिमतः तदा 'हन्यात्' इति व्याख्येयं स्यात् ।

अथवेत्यादि । ज्ञानस्य धीशब्दवाच्यस्य अन्तःकरणात्मकमनोरूपत्वं 'कामः संकल्पः --- धीर्भीरित्येतत् सर्वं मन एव' (*Br. U.* I, v, 3) इत्युपनिषत्प्रसिद्धमित्यभिप्रेत्य ज्ञायते अनेनेति ज्ञानमिति करणव्युत्पत्तिं मनसि कृत्वा च व्याचष्टे— ज्ञानेन मनसा इति । एवं विज्ञानपदस्य विशिष्टान्तःकरणपरत्वात् आह—विज्ञानेन बुद्ध्या इति । एवं च पूर्वतनश्लोकेनैकवाक्यता । किं च मनसः संकल्पविकल्पात्मकत्वात् बुद्धेश्च निश्चयात्मकत्वाच्च उक्तमर्थं पिण्डीकृत्य दर्शयति -- संकल्पे न गृह्णीयात् इति, न निश्चिनुयात् इति च ॥

श्लो. ४७-४८ (व्या) शत्रुलक्षणात् विषयात् इति । पूर्वं 'यथा चक्षुषा शत्रुर्दृष्टः' इत्यत्रोपदर्शितरीत्या अत्रापि दृष्टिपथं गतो यः शत्रुः तदात्मकात् विषयादित्यर्थः ॥

श्लो. ४७-४८ (व्या) क्रोधेन कथं मनसो बुद्धेरात्मनो वा क्षोभ इत्यादि । ननु 'काम एष क्रोध एष' इति पद्ये (III, 37) कामक्रोधयोरुभयोरपि वैरित्वे स्पष्टतया प्रतिपादितेऽपि किमित्याचार्यः 'क्रोध एव पापदायी' (III, 37) इति, '- - - -मोघः श्रमो भवति क्रोधनस्य' (42) इति, 'चक्षुषा शत्रौ दृष्टे क्रोध आत्मानं जनयति - - - - मोहं जनयन् ज्ञानं नाशयति (45) इति, 'क्रोधादिकमिन्द्रियादिषु प्रथमं न गृह्णीयात्' (46) इति, तथा प्रकृतेऽपि 'क्रोधेन कथम् - - - - क्षोभः' इति क्रोधस्यैव प्रकृतत्वं शत्रुत्वं च मन्यते; यदा श्रीशङ्करभास्कररामकण्ठादयः कामक्रोधयोरुभयोरपि शत्रुत्वमङ्गीकृत्यैव व्याख्यानमारचयन्ति ? इति कदाचिद्भवेच्छङ्का शिष्यस्य । तामपाकरिष्णुराचार्यो रहस्यमाह - रहस्यविदामित्यादि । अत्रायमभिप्रायः - खण्डितः काम एव क्रोधीभवतीति निश्चप्रचम् । यस्य चानुभवः 'सर्वमहम्' इति स कामयते सर्वमिति तदीयकामः आत्मकामः सन् पराहन्तारूपः सर्वदा सर्वत्र सर्वथा च खण्डनशून्यः न कदापि क्रोधत्वेन परिणमते । वक्ष्यति च - 'काम इच्छा संविन्मात्ररूपा, यस्या घटपटादिभिर्धर्मरूपैर्नास्ति विरोधः । इच्छा हि सर्वत्र भगवच्छक्तितया अनयायिनी न क्वचिदपि विरुध्यते - - - - - तदुपासकतया शुद्धसंवित्स्वभावत्वं ज्ञानिन' इत्यादि (VII, 11) । तथा च वस्तुगत्या कामो न वैरीभवति । क्रोधस्तु परिमितस्य कामस्य खण्डनाज्जायमानो वैरीभवत्येव । वस्तुतस्तु कामस्य परिमितत्वम् अवच्छिन्नत्वं कामितवस्तुभिन्नेषु द्वेषात्मकशत्रुप्रयुक्तमेव । औदासीन्यमपि 'सर्वमहम्' इति पराहन्ताप्रति-

द्वन्द्व इति शत्रुरेवेति तत्प्रयुक्तमपि द्वेषप्रयुक्तादविशिष्टम् । तथा च परिमितः कामो द्वेषपूर्वकत्वात् वस्तुतो द्वेषः क्रोध एव । 'काम एष क्रोध एष' इति मूलस्यापि आचार्यमतेन अयमेवाभिप्राय इत्यत्र सुधियः प्रमाणम् । तस्मात् सुष्ठूक्तं 'क्रोध एव पापदायी' इत्यादि ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां तृतीयोऽध्यायः ॥

# चतुर्थोऽध्यायः

श्रीभगवानुवाच—

एवं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
स कालेनैव महता योगो नष्टः परन्तप ॥ २ ॥

स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

एवमित्यादि उत्तमम् इत्यन्तम् । एतच्च गुरुपरम्पराप्राप्तमपि[1] अद्यत्वे नष्टमित्यनेन[2] भगवान् अस्य ज्ञानस्य दुर्लभतां गौरवं च प्रदर्शयति । भक्तोऽसि मे सखा चेति । त्वं भक्तः मत्परमः सखा च । चशब्देन अन्वाचय उच्यते । तेन यथा भिक्षाटने भिक्षायां प्राधान्यं गवानयने त्वप्राधान्यम् एवं भक्तिरत्र गुरुं प्रति प्रधानं न सखित्वमपीति तात्पर्यार्थः ॥ १-३॥

अर्जुन उवाच—

अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेवं विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥

अपरमिति । अर्जुनो भगवत्स्वरूपं जानन्नपि लोके स्फुटीकर्तुं पृच्छति ॥ ४ ॥

---

1. S -परम्परायातमपि; K -परम्परया प्राप्तमपि
2. S,N अद्यत्वे तन्नष्ट-

श्रीभगवानुवाच—

बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥

अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मांशं सृजाम्यहम् ॥ ७ ॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ८ ॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

बहूनि इत्यादि अर्जुन इत्यन्तम् । श्रीभगवान् किल पूर्णषाड्गुण्यत्वात् शरीरसंपर्कमात्ररहितोऽपि स्थितिकारित्वात् कारुणिकतया आत्मांशं सृजति । आत्मा पूर्णषाड्गुण्यः, अंशः उपकारकत्वेन [1]अप्रधानभूतो यत्र तत् आत्मांशं शरीरं गृह्णाति इत्यर्थः । अत एवास्य जन्म दिव्यम्, यत आत्ममायया योगप्रज्ञया [2]स्वस्वातन्त्र्यशक्त्या आरब्धम्, न कर्मभिः । कर्मापि दिव्यम् फलदानासमर्थत्वात् । यश्चैवमेतत्तत्त्वं वेत्ति, आत्मन्यप्येवमेव मन्यते सोऽवश्यं भगवद्वासुदेवतत्त्वं जानाति ।५ ९॥

वीतरागभयक्रोधा मन्मया मद्व्यपाश्रयाः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥

1. B,N omit अ
2. B, omits स्व

वीतेति । तथा चैवं विदन्तो मन्मयत्वात् परिपूर्णच्छत्वात् क्रोधादिरहिताः निष्फलं कर्म करणीयं कुर्वाणाः बहवो मत्स्वरूपमवाप्ताः ॥ १० ॥

यतः—

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥

कांक्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥

ये यथेति । कांक्षन्त इति । ये यथैव[1] बुद्धया मामाश्रयन्ते तान् प्रति तदेव स्वरूपमहं गृह्णन्ताननुगृह्णामि । एवमेव मदीयं मार्गं मन्मया अमन्मयाश्च सर्वं एवानुवर्तन्ते । न हि ज्योतिष्टोमादिरन्यो मार्गः, मदीयैव सा तथेच्छा । वक्ष्यते हि—चातुर्वर्ण्यं मया सृष्टमिति ।

अन्यस्तु आह— लिङर्थे लट्; यथा 'अतिरात्रे षोडशिनं गृह्णन्ति' इत्यत्र[2] 'गृह्णीयुः' इत्यर्थः, एवमिहापि [3]अनुवर्तन्ते अनुवर्तेरन् इति ।

मानुषे एव लोके भोगापवर्गलक्षणा सिद्धिः नान्यत्रेति ॥ ११–१२ ॥

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागतः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥

---

1. S,B,K यथैव
2. S omits इत्यत्र
3. N omits अनुवर्तन्ते

न मां कर्माणि लिम्पन्ति न मे कामः फलेष्वपि ।
इति मां योऽभिजनाति कर्मभिर्न स बध्यते ॥ १४ ॥

चातुर्वर्ण्यमिति । न मामिति । मम किल कथमाकाशकल्पस्य कर्मभिः लेपः? आकाशप्रतिमत्वं कामनाभावात् । इति[1], ज्ञान-प्रकारेण यो भगवन्तमेवाश्रयते सर्वत्र सर्वदा आनन्दघनं परमेश्वरमेव 'न वासुदेवात्परमस्ति किंचित्' इति रीत्या[2] विमृशति, तस्य किं कर्मभिः बन्धः? ॥ १३-१४ ॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात् त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥

एवमिति । तस्मादनया बुद्धया पवित्रीकृतस्त्वमपि कर्माण्यवश्यं कर्तव्यानि कुरु ॥ १५ ॥

अथ उच्यतेऽकरणादेव सिद्धिरिति, तन्न । यतः—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥

किं कर्म इति । कर्मणो ह्यपि इति । कर्माकर्मणोर्विभागः दुष्परिज्ञानः । तथा च विहिते कर्मण्यपि[3] मध्ये दुष्टं कर्मास्ति अग्निष्टोमे इव पशुवधः । विरुद्धेऽपि च कर्मणि शुभमस्ति कर्म ।

1. S इत्यनेन
2. B,N,K नीत्या
3. S,B,N तथा च (B,N omit च) कर्मण्यपि (B-णोऽपि)

तथाहि[1] हिंस्रप्राणिवधे प्रजोपतापाभावः। अकरणेऽपि च शुभाशुभं कर्म अस्ति, वाङ्मनसकृतानां कर्मणामवश्यं भावात्[2], तेषां ज्ञानमन्तरेण दुष्परिहरत्वात्। अतः कुशलैरपि गहनत्वात् कर्म न ज्ञायते 'अनेन[3] शुभकर्मणा शुभमस्माकं भविष्यति, अनेन च कर्मणामनारंभेण मोक्षो न (नो?) भविष्यति' इति। तस्माद्वक्ष्यमाणो विज्ञानवह्निरेव अवश्यं सकलशुभाशुभकर्मेन्धनप्लोषसमर्थः शरणत्वेनान्वेष्य इति भगवतोऽभिप्रायः॥ १६-१७॥

तमेव उद्बोधयितुमाह—

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स चोक्तः कृत्स्नकर्मकृत्॥ १८॥

कर्मणि इति। आत्मीयेषु कर्मसु यः अकर्तृत्वं पश्यति प्रशान्ततया; अकर्मसु च परकृतेषु आत्मकृतत्वं जानाति परिपूर्णोदितरूपत्वेन; स एव सर्वस्य मध्ये बुद्धिमान् कार्त्स्न्येन साकल्येनासौ कर्म करोति अतोऽस्य केन कर्मणा फलं दीयताम इति उदितदशायाम्। प्रशान्तत्वे तु कृत्स्नानि कर्माणि कृन्तति छिनत्ति। अतः सर्वमेव कर्म करोति, न किञ्चिद्वा करोति इत्युपनिषत्॥ १८॥[4]

---

1. B,N यथा instead of तथा हि
2. S—श्यभावित्वात्; K (n)-वित्वादिति
3. S तेन
4. After this, N adds the following long passage which is also found in S in the margin only with slight variations:—

सर्वस्मिन् कर्मणि देहेन्द्रियक्रियायां अकर्म स्वात्मनि निष्क्रियत्वं 'श्रोत्रादीनि शब्दादिषु वर्तन्ते वागादीनि वचनादानादौ, मम किमायातम्?' इत्येवंलक्षणं यः

[Contd. in p-72]

अत एव—

यस्य सर्वे समारंभाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥

यस्येति । कामेषु काम्यमानेषु फलेषु संकल्पं विहाय क्रियमाणानि कथितकथयिष्यमाणस्वरूपे ज्ञानाग्नौ अनुप्रवि(वै)-श्य दह्यन्ते ॥ १९ ॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित् करोति सः ॥ २० ॥

---

[Contd. from p-71]
पश्येत्; अकर्मणि च परैः प्रमातृभिः कृते कर्मणि पूजनादौ [स्वकीयं] कर्म क्रियां 'एते कर्तारः सर्वेऽहमेव' इति दृष्ट्या—

'पूजकैरविभेदेन सदा पूजेति पूजनम्'

इति सिद्धभाषाप्रामाण्यात । स एव मनुष्येषु सामान्यजनेषु मध्ये बुद्धिमान्, देहेन्द्रियादिष्वपि कर्तृत्वदर्शनात् आत्मनि निष्क्रियत्वदर्शनाच्च । स एव कृत्स्न-कर्मकृत् कर्त्रन्तरेषु स्वरूपदृष्टयध्यवसायात् ।

'पूजनान्नास्ति मे तुष्टिः नास्ति खेदो ह्यपूजनात् ।
पूजकैरविभेदेन सदा पूजेति पूजनम् ॥'

इति सोमानन्दपादाः ।

ननु परकृते कर्मणि कथं स्वकीयकर्मदर्शनम्? न ह्यन्यकृतभोजनेन स्वकृत-भोजनाद्युपगमः । तस्मात् अकर्मणि च कर्म यः पश्येत् इति कथमिति चेत्? ज्ञानिन एवंविधानुसन्धानात् इति ब्रूमः । यतः निष्पन्ननिष्कम्पविज्ञानशालिनः प्रमे-यान्तरप्रमात्रन्तरजाते बहुविधमनुसन्धानमस्ति । यथा 'य एवं घटादीन्वेद्मि स एव पटादीन्' । एवं चैत्रमैत्रादिप्रमात्रन्तरविषयमनुसन्धानं ज्ञेयम् । अत एव वसिष्ठपादैरपि 'पूजकैरविभेदः' इत्युपदिष्टम् । तस्मात् सुष्ठूक्तम् अकर्मणि चेति ॥

The whole passage seems to be an elaboration by way of elucidating what Ag. has already stated under IV, 18

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥

त्यक्त्वेति । निराशीरिति । अभिप्रवृत्तोऽपि आभिमुख्येन प्रवृत्तोऽपि । शरीरोपयोगि इन्द्रियव्यापारात्मकं कर्म शारीरं यत् मनोबुद्धिभ्यां न तथा अनुरञ्जितम् ॥ २०-२१ ॥

यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२ ॥

यदृच्छेति । कृत्वापि न निबध्यते । कर्मकर्तरि प्रयोगः । स्वयमेव हि आत्मानं बध्नाति फलवासनाकालुष्यमुपाददानः[1] इत्यर्थः[2] । अन्यथा जडानां कर्मणां बन्धने स्वातन्त्र्यं न तथा हृदयंगमम् ॥ २२ ॥

गतसंगस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥

गतसंगस्येति । यज्ञायेति जातावेकवचनम् । यज्ञाः वक्ष्यमाणलक्षणाः ॥ २३ ॥

यज्ञायेत्युक्तम् तत्स्वरूपसामान्यं तावदाह—

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥

ब्रह्मार्पणमिति । ब्रह्मणि अर्पणं, तत एव प्रवृत्तस्य पुनस्तत्रैव अनुप्रवेशनं यस्य तत् । ब्रह्म समग्रं विश्वात्मकं यदेतत्

1. B,N उपाददानः, गृह्णानः
2. S omits इत्यर्थः

हविः तत् ब्रह्मणि परमबोधे प्रशान्ते अग्नौ; ब्रह्मणा येन केनचित् कर्मणा, हुतं तद्दीप्त्यभिवृद्धये समर्पितम् इति ईदृशं ब्रह्मकर्मैव समाधिः यस्य योगिनः तेन ब्रह्मैव गन्तव्यं ज्ञेय नान्यत्[1] किञ्चित्; अन्याभावात्।

यदि वा तदर्थेन यदर्थाक्षेपात् एवं संबन्धः– यत् खलु ब्रह्मस्वरूपेण यजमानेन ब्रह्माग्नौ ब्रह्महविर्हुतं ब्रह्मणि(णे?) ब्रह्मस्वभावदेवतोद्देशेन अर्पणं यस्य तत्; एवंभूतं यत् ब्रह्मकर्म तदेव समाधिः आत्मस्वरूप[2]लाभोपायत्वात्; तेन ब्रह्मकर्मसमाधिना नान्यत् फलमवाप्यते अपि तु ब्रह्मैव इति। 'ये यथा मां प्रपद्यन्ते' इति निर्वाहितम्। मितस्वरूपीकृतमदात्मकयज्ञस्वभावा इति तादृशफलभागिन इत्यन्यत्[3]। अपरिमितपरिपूर्णमदात्मकयज्ञस्वरूपवेदिनस्तु कथं परिमितफललवलोपटच्चभागिनो भवेयुरिति तात्पर्यम् इति।

अनेन श्लोकेन वक्ष्यमाणैश्च श्लोकैः परमं रहस्यमुपनिबद्धम्। तच्चास्माभिर्मितबुद्धिभिरपि यथाबुद्धि यथागुर्वाम्नायं च विवृतम्। मुखसंप्रदायक्रममन्तरेण नैतन्नभश्चित्रमिव चित्तमुपारोहति इति न वयमुपालम्भनीयाः।

अत्र कैश्चित् हविषः अग्नेः करणानां च स्रुगादीनां क्रियायाश्च ब्रह्मविशेषणत्वमित्युक्तम्[4]; तदुपेक्ष्यमेव। तेषां रहस्यसंप्रदायक्रमे[5] अक्षुण्णत्वात् ॥ २४ ॥

---

1. B नान्यदपि
2. B omits स्वरूप
3. B,K इत्युक्तम्
4. S अत्र हविषः ..........मिति कैश्चिदुक्तम्
5. S संप्रदाये

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥

देवमेवेति । अपरे दैवानि क्रीडनशीलानि[1] इन्द्रियाणि आश्रित्य यः स्थितो यज्ञो निजविषयग्रहणलक्षणः, तमेव परितः उपासते, आमूलाद्विमृशन्ते, स्वात्मलाभं लभन्ते । अत एव ते योगिनः सर्वावस्थासु सततमेव योगयुक्तत्वात् । नित्ययोगे ह्यत्रायं मत्वर्थीयः [इनिः] । एनमेव च विषयग्रहणात्मकं यज्ञं यज्ञेनैव तेनैव [उक्त]लक्षणेन अपरे पूरयितुमशक्ये ब्रह्माग्नौ जुह्वति इति कैश्चित् व्याख्यातम् ।

मुनेस्तु पौर्वापर्याविरुद्धत्वात् योऽर्थ [तस्य] हृदि स्थितः तं प्रकाशयामः । केचिद्योगयुक्ताः सन्तो देवं नानारूपेन्द्रादिदेवतोद्देशेनैव बाह्यद्रव्यमयं यज्ञमुपाचरन्ति । तं च क्रियमाणमेव यज्ञं [यज्ञेन] कर्तव्यमिदमित्येव बुद्ध्या फलानपेक्षया[2] अपरे, दुष्पूरे ब्रह्माग्नौ अर्पयन्तीति द्रव्ययज्ञा अपि परं[3] ब्रह्म यान्ति । यतो वक्ष्यते 'सर्वेऽप्येते यज्ञविदः' इति (गीता ४.३०) श्रुतिरपि

'यज्ञेन यज्ञमयजन्त देवाः'

(ऋ. सं. X, 164, 50) इति ॥ २५ ॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥

---

1. K क्रीडाशीलानि
2. S -पेक्षितया
3. B omits परम्

श्रोत्रादीनीति । अन्ये तु संयमाग्निष्विन्द्रियाणीति । संयमः मनः, तस्य ये अग्नयः प्रतिपन्नभावभावनारूपा अभिलाषप्लोषका विस्फुलिङ्गाः तेषु इन्द्रियाणि अर्पयन्ति । अत एव ते तपोयज्ञाः । इतरे ज्ञानपरिदीपितेषु फलदाहकेषु इन्द्रियाग्निषु विषयानर्पयन्ति; [1]भेदवासनानिरासायैव भोगानभिलषन्ति इत्युपनिषत् । तथा च मयैव लघ्व्यां प्रक्रियायामुक्तम्—

'न भोग्यं व्यतिरिक्तं हि भोक्तुस्त्वत्तो विभाव्यते ।
एष एव हि भोगो यत् तादात्म्यं भोक्तृभोग्ययोः ॥' इति

स्पन्देऽपि[2]–

'भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः ।'

इति ॥ २६ ॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

सर्वाणीति । द्रव्ययज्ञा इति । ते च सर्वानिन्द्रियव्यापारान्, मानसान् [व्यापारान्], मुखनासिकानिर्गमनमूत्राद्यधोनयनादीन् वायवीयांश्च आत्मनो मनसः[3] संयमहेतौ योगवाग्नि

1. K भोगवासना-

2. B omits स्पन्देऽपि and the succeeding hemistitch.

3. B,N मनसश्च

ऐकाग्रचवह्नौ सम्यग्ज्ञानपरिदीपिते[1] पूरयितव्ये निवेशयन्ति। गृह्यमाणं विषयं संकल्प्यमानं वा तदेकाग्रतयैव [2]परित्यक्तान्यव्यापारया बुद्धया गृह्णन्ति इति तात्पर्यम्। तदुक्तं शिवोपनिषदि—

'भावेऽत्यक्ते[3] निरुद्धा चित्[4]
नैव भावान्तरं व्रजेत्।
तदा तन्मध्यभावेन[5]
विकसत्यति भावना॥ '(विज्ञानभैरव, 62) इति।

एवं योगयज्ञाः व्याख्याताः॥ २७-२८॥

एवं द्रव्ययज्ञः तपोयज्ञो योगयज्ञश्चोक्तलक्षणाः। स्वाध्यायज्ञानयज्ञाश्च ये ते संप्रति लक्ष्यन्ते—

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः॥ २९॥
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः॥ ३०॥

अपाने इति। अपरे इति। प्राणम् उदयमानं[6] नादं[7] प्रणवादिमात्रालयान्तम् अपाने अस्तं याति स्वानन्दान्तःप्रवेशा-

1. B परिबोधिते
2. B,N तत्परित्यक्तान्य-
3. S,B,N भावे त्यक्ते
4. B,N चेत्
5. K तन्मयभावेन
6. B,N उदीयमानम्
7. S,B omit नादम्

त्मनि जुह्वति इति पिण्डस्थैर्यात्मा स्वाध्यायः। शिष्यात्मना च वयानयग्रहणाय केचिदस्तं यान्तम् उदी(द)यमाने संवेश्य, तदेकीकारेण अपवर्गदानात्[1] आत्मनि शिष्यात्मनि च शोधनबोधनप्रवेशनयोजनरूपे स्वाध्याययज्ञे[2] स्वपरानन्दमये प्रतिष्ठितमनसः। अत एव पूरकः प्रथममुक्तः, चरमं रेचकः। प्रथमेन च पादेन[3] विषयभोगान्तर्मुखीकरणं द्वितीयेन महाविदेहधारणाक्रमाद्विषयग्रहणाय निस्सरणं[4] ध्वन्यते। अतश्च स्वाध्याययज्ञेभ्यो [व अन्ये] ज्ञानयज्ञाः। एत एवोक्तव्यापारपरिशीलनावशपरिपूरितस्वात्मशिष्यात्ममनोरथाः द्वे अप्येते गती निरुध्य आहारं विषयभोगात्मकं नियम्य, प्राणान् सकलचित्तवृत्त्युदयान् प्राणेषु परविरानन्दोल्लासेषु, जुह्वति कुंभकप्रशान्त्या अर्पयन्ति[5]। सर्वे चैते द्रव्ययज्ञात् प्रभृति ज्ञानयज्ञान्तं यज्ञस्य तत्त्वज्ञाः, तेनैव च क्षपितकल्मषाः समूलोन्मूलितभेदवासनामयमहामोहाः ॥ २९-३० ॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

यज्ञेति। यज्ञेन शिष्टम् आहृतं यज्ञाच्च[6] निजकरणतर्पणरूपादवशिष्टं [वा] स्वात्मविश्रान्तिरूपं परानन्द[7]विरानन्दात्म-

1. S अपवर्गात्
2. S,B,N स्वाध्यायज्ञाने
3. B,N भागेन
4. N विसारणम्
5. S omits अर्पयन्ति
6. B,N यज्ञाश्च
7. B,N परानन्दं

कममृतमुपभुञ्जाना अपि[1] यथेच्छं संसृज्यन्ते ब्रह्मतयेति। तदुपरम्यते अतिरहस्यस्फुटप्रकटववाचालतायाः।

अत्र बहुतरो रहस्यरसः अन्तःसंलीनीकृतोऽपि निबिडतरभक्तिसेवासम्प्रसादितगुरुचरण[2]संप्राप्तसंप्रदायमहौषधसमीकृतधातूनां चर्वणादिविषयतां भूतार्थास्वादहेतुतां च प्रतिपद्यते[3]।

अत्र व्याख्यान्तराणि टीकाकारैः प्रदर्शितानि। तानि अस्मद्गुरुपादनिरुक्तानि च स्वयमेव सचेतसः संप्रधार्यन्तामिति किमन्येन[4] हन्त व्याख्यातृवचनदूषणाविनोदनेन। तदुपक्रान्तमेवोपक्रम्यते[5] ॥ ३१ ॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे।
कर्मजान्विद्धि तान् सर्वान् एवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥

एवमिति। सर्वे च एते यज्ञा ब्रह्मणो मुखे द्वारे उपायत्वे कथिताः। तेषु कर्मणामनुगमोऽस्तीत्येवं ज्ञात्वा त्वमपि बन्धनान्मोक्षमेष्यसि ॥ ३२ ॥

अत्र त्वयं विशेषः—

श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः परंतप।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥

---

1. B,N भुञ्जाना इति यथेच्छम्
2. S,B,N गुरुवचनसं—
3. B प्रतिपाद्यते
4. B omits किमन्येन
5. S —पगम्यते

श्रेयानिति। द्रव्ययज्ञात् केवलात् ज्ञानदीपितो यज्ञः श्रेष्ठ। केवलता मयटा सूचिता। यतः सर्वं कर्म ज्ञाने निष्ठामेति॥ ३३॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।
उपदेक्ष्यन्ति ते तत्त्वं(?) ज्ञानिनस्तत्त्वदर्शिनः॥ ३४॥
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि॥ ३५॥

तद्विद्धीति। यज्ज्ञात्वेति। तच्च ज्ञानं, प्रणिपातेन भक्त्या, परिप्रश्नेन ऊहापोहतर्कवितर्कादिभिः, सेवया अभ्यासेन जानीहि। यतः एवंभूतस्य तव ज्ञानिनः निजा एव संवित्तिविशेषानुगृहीता इन्द्रियविशेषाः तत्त्वम् उप समीपे देक्ष्यन्ति प्रापयिष्यन्ति। तथाहि ते तत्त्वमेव दर्शयन्तीति तत्त्वदर्शिनः। उक्तं हि—

'योग एव योगस्योपाध्यायः' इति।

'ऋतंभरा तत्र प्रज्ञा' (*Y S*, I, 48) इति च।

'अन्ये ज्ञानिनः पुरुषा' इति व्याख्यायमाने भगवान् स्वयं [यत्] उपदिष्टवान् तदसत्यमित्युक्तं स्यात्। [अथवा] एवमभिधाने[1] प्रयोजनम् 'अन्येऽपि लोकाः प्रणिपातादिना ज्ञानिभ्यो ज्ञानं गृह्णीयुः न यथाकथंचित्' इति समयप्रतिपादनम्।

आत्मनि मयि, मत्स्वरूपतां याते[2] आत्मनि इति सामानाधिकरण्यम्। अथोशब्दः पादपूरणे। आत्मना ईश्वरस्य साम्ये कोऽपि विशेष उक्तः। असाम्ये विकल्पार्थानुपपत्तिः॥ ३४-३५॥

1. S. अभिधानेन च 2. S, K प्राप्ते

'सर्वं कर्माखिलम्' (श्लो.४-३३) इति यदुक्तं तत्स्फुटयितुं प्रथमश्लोकेन 'अधर्मोऽपि नश्यति' इति वदन् 'सर्वं कर्म' इति द्वितीयेन संस्कारलेशोऽपि नावतिष्ठतीति सूचयन् 'अखिलम्' इति व्याचष्टे—

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥ ३६ ॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥

अपि चेदिति । यथेति । [1]सुसमिद्धोऽभ्यासजातप्रतिपत्तिदार्ढ्यबन्धेन ज्ञानाग्निर्भवति यथा, तथा प्रयतनीयमिति [भावः] ॥ ३६–३७ ॥

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥

नहीति । पवित्रं हि ज्ञानसमं नास्ति । अन्यस्य संवृद्ध्या[2] पवित्रत्वं, न वस्तुत इत्यतिप्रसंगभयात् न प्रताय्यते । पवित्रत्वं[3] चास्य स्वयं ज्ञास्यतीति सुबुद्धतायाम्[4] ॥ ३८ ॥

श्रद्धावान् लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥

---

1. K omits सु
2. K (n) संवृत्या
3. S,K पवित्रताम्
4. S स्वप्रबुद्धतायाम्

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥

श्रद्धावानिति । अज्ञ इति । अत्र च श्रद्धागमः तत्पर-व्यापारत्वं [च] झगित्येव, आस्तिकत्वात् असंशयत्वे सति, उत्पद्यते । तस्मादसंशयवता गुर्वागमादृतेन भाव्यम्, संशयस्य सर्वनाशकत्वात्; ससंशयो हि न किञ्चिज्जानाति, अश्रद्दधानत्वात् । तस्मात् निःसंशयेन भाव्यम् इति वाक्यार्थः । ३९-४० ॥

सकलाध्यायविस्फारितोऽर्थः श्लोकद्वयेन संक्षिप्य उच्यते[1]—

योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनञ्जय ॥ ४१ ॥

योगेति । योगेनैव कर्मणां संन्यास उपपद्यते नान्यथा इति विचारितं विचारयिष्यते च ॥ ४१ ॥

यत एवम्[2]—

तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥

॥ इति श्रीमद्भगवद्गीतायां चतुर्थोऽध्यायः ॥

तस्मादिति । संशयं छित्त्वा योगं कर्मसु कौशलम् उक्तक्रमेण आतिष्ठ । ततश्च उत्तिष्ठ, त्वं स्वव्यापारं कर्तव्यतामात्रेण कुर्विति ॥ ४२ ॥

॥ शिवम् ॥

1. K संक्षिप्यते
2. S omits यत एवम्

अत्र संग्रहश्लोकः—

विधत्ते कर्म यत्किञ्चित् अक्षेच्छामात्रपूर्वकम् ।
तेनैव शुभभाजः स्युः तृप्ताः [1]करणदेवताः ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपा विरचिते श्रीमद्भगवद्गीतार्थसंग्रहे चतुर्थोऽध्यायः ॥

॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. १६-१७(व्या) उपतापाभावः - उपतापध्वंसः ॥

श्लो. २२(व्या) अन्यथेत्यादि । इदमुपलक्षणम्—कृत्वेति क्त्वाप्रत्ययार्थसमानकर्तृकत्वस्य अन्यथानुपपत्तिरित्यपि बोध्यम् ॥

श्लो. २४ (व्या) ब्रह्मणि अर्पणमिति । अस्मिन् प्रथमव्याख्यापक्षे योगिनः समाधियुक्तस्य परब्रह्मप्राप्तिः प्रकृतगीताश्लोकेन प्रतिपादिता भवति । अत्र च पक्षे ब्रह्महविरित्यत्र ब्रह्मपदं ब्रह्मकार्यजीवपरम् तस्मिंश्च हविष्ट्वारोपः । ब्रह्माग्नाविति प्रशान्तब्रह्मणि अग्नित्वारोपः । ब्रह्मणेत्यत्र प्रकृत्यर्थः कर्म तृतीयार्थः करणत्वम् । इतिशब्दोऽध्याहार्यः स च प्रकृतपद्यपूर्वार्धार्थमनुवदति; तस्य चार्थस्य ब्रह्मात्मककर्म समाधिर्यस्येति बहुव्रीह्यर्थैकदेशे अभेदेनान्वयः । एतादृशव्याख्याने क्लेशं परिचिन्त्य व्याख्यानान्तरमाह—यदि वेत्यादिना । अस्मिंश्च पक्षे ज्ञानिना यजमानेनानुष्ठीयमानकर्मणः ब्रह्मप्राप्तिः फलमिति

---

1. B कारण–
N कुरुत

प्रतिपादितं भवति । तथा अग्नेः, हविषः, यजमानस्य च ब्रह्मत्वं प्रतिपाद्यते । यथाह भगवान् कालिदासः-

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं
या हविर्या च होत्री ----------इति ।

ब्रह्मणेति तृतीयायाः कर्तृत्वमर्थः । ब्रह्मकर्मसमाधिनेति कर्मधारयः इति बोध्यम् । आङ्ग्लभाषानुवादे किंचिदिवार्थभेदो वर्णितः ॥

श्लो २५ (व्या) कर्तव्यमित्येव बुद्धयेति । तथा च मूले यज्ञेनेत्यस्य यज्ञत्वेनेत्यर्थः; यज्ञत्वबुद्धया, अवश्यकर्तव्यबुद्धयेति यावत् ॥

श्लो २७-२८ (व्या) ते चेति । 'अपरे च' इति भाव्यं, मूलानुसारात् । अथवा न परे अपरे इति मूलार्थविवक्षया च अपरे इति मूलस्य व्याख्या ते च इति ते एवेत्यर्थः ।

भावेऽत्यक्ते इत्यादि । अत्र प्रकरणे अस्य पद्यस्यायमर्थ आचार्याभिमत इव भाति — अत्यक्ते स्वातन्त्र्यत्वेन गृहीते, भावे विषये, विरुद्धा ऐकाग्र्यं प्रापिता, चित्, भावान्तरं विषयान्तरं, नैव व्रजेत् यदा, तदा सा भावना चित्, तन्मध्यभावेन, तद्विषयान्तःसंलीनचिदात्मना (अभेदे तृतीया), अति विकसति नितरां प्रफुल्ला भवति उक्तरीत्या 'न भोग्यं व्यतिरिक्तं हि भोक्तुः' इति प्रत्यभिजानाति इति । अधिकमन्यत्र ॥

श्लो. २९-३० (व्या) प्रकर्षम् अनिति इति प्राणशब्दव्युत्पत्तेराह- उदयमानमिति । उत्पूर्वकात् अयधातोः शानच् ।

अप अधः अनितीत्यपानः तस्मिन् अपाने; तस्य व्याख्या अस्तं यातीति। यातीति याधातोः शन्नन्तात् सप्तमी।

एवमुक्तरीत्या स्वाध्यायः अर्हंध्यानात्मकः इति तस्य ज्ञानयज्ञादभेद एवेति दर्शयितुं स्याध्याययज्ञानयज्ञाश्चेति मूलं स्वाध्यायात्मकज्ञानसूचकमिति तदभिप्रायमनुवदन्नाह-अतश्चेत्यादि।

उक्तव्यापार - परिशीलनवश-परिपूरितस्वात्म-शिष्यात्ममनोरथा इति समस्तं पदं प्राणायामपरायणा इति मूलस्यार्थवर्णनरूपम्। तथाहि— परिशीलनशब्दः सामान्यतो नपुंसकः। प्राणायामपरायणा इत्यस्य प्र, अन, आ, अय, अम, पर, अयन इत्यवयवसप्तकत्वादेवमर्थोऽभिप्रेत इव। प्रकृष्टस्य अनस्य प्राणनस्य यः आ परितः अयः गमनव्यापारः शीलनात्मकः – गत्यर्थानां ज्ञानार्थकत्वात् - तेन तद्वशेन अमं संभक्तिः संभजनं पूरणं यस्य तत्; तादृशं परम् उत्कृष्टम् अयनं मनोरथः येषां ते इति; तादृशं यत् परस्य उत्कृष्टस्य आत्मनः अयनं मनोरथः, तत् येषां ते इति वा विग्रहार्थः। अम्यते इत्यमं संभक्तिः, संभजनं, पूरणमिति यावत्। अम संभक्तौ इत्यतः भावे क्विप्। ईयते प्राप्यते इत्ययनं मनोरथः। इण्धातोः कर्मणि ल्युट्॥

श्लो. ३२ (व्या) उपायत्वे इति। उपायत्वेन इति उपाये इत्येव वा विवक्षितम्। उपायप्रकरणे इत्यर्थः। 'मुखमुपाये प्रारम्भे' इति 'द्वारं निर्गमेऽभ्युपाये' इति च हैमकोशात्॥

श्लो. ३३ (व्या) द्रव्यमयाद्यज्ञादिति मूलस्य तात्पर्यमाह द्रव्ययज्ञात् केवलादिति। केवलद्रव्यमात्रनिर्वर्त्यात् यज्ञादित्यक्षरार्थः॥

श्लो. ३४-३५ (व्या) संवित्तिविशेषानुगृहीता इति। संवित्त्या विशेषेणानुगृहीता इत्यर्थः ।

तत्त्वम् उप इति । अनेनेदं सूचितं भवति – तद्विद्धीति गीतापद्ये तृतीयपादम् 'उपदेक्ष्यन्ति ते तत्त्वम्' इति पपाठ आचार्य इति। सार्वत्रिकस्तु पाठः 'उपदेक्ष्यन्ति ते ज्ञानम्' इति।

साम्ये इति – साम्यप्रदर्शनायेत्यर्थः। निमित्तात् कर्मयोगे सप्तमी । विशेषः विशेषको धर्मः, तदुभयतिष्ठेत्यादिः । असाम्ये इति सति सप्तमी । असाम्ये विवक्षिते सति इत्यर्थः । विकल्पानुपपत्तिः विकल्पाद्यर्थानुपपत्तिः, अथो इत्यस्येत्यादिः ॥

श्लो. ३६-३७ (अ) सर्वं कर्म इति द्वितीयेन इति । 'सर्वकर्माणि' इत्यादिना द्वितीयश्लोकगतेनेति विवक्षितम् । एवं च 'सर्वकर्माणि' इत्यादिना द्वितीयश्लोकगतेन 'संस्कारलेशोऽपि नावतिष्ठते' इति अखिलम् इत्यस्यार्थं सूचयन् व्याचष्टे इत्यन्वयः॥

श्लो. ३८ (व्या) संवृद्धयेति, अथवा संवृत्त्येति । संवित्त्येति विवक्षितमिव । संवित्तिसंबन्धेनेत्यर्थः ॥

श्लो. ३९-४० (व्या) तस्मादित्यादिना अश्रद्दधानत्वादिष्वन्तेन अर्थतः पुनरुक्तमिव यत् अव्यवहितपूर्ववाक्येनोक्तम् ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां चतुर्थोऽध्यायः ॥

# पञ्चमोऽध्यायः

अर्जुन उवाच—

संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यः श्रेयानेतयोरेकस्तं मे ब्रूहि विनिश्चितम् ॥ १ ॥

संन्यासमिति । 'संन्यासः प्रधानम्, पुनः योगः ?' इति ससंशयस्य प्रश्नः ॥ १ ॥

श्रीभगवानुवाच–

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ २ ॥

संन्यास इति । संन्यासः कर्म[योगः] च, नात्र एकोऽभिहितः, अपि तु उभौ । संमिलितौ [तौ] निश्श्रेयसं दत्तः । योगेन विना संन्यासो न संभवतीति योगस्य विशेषः ॥ २ ॥

ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धाद्विमुच्यते ॥ ३ ॥

ज्ञेय इति । अतश्च स एव सार्वकालिकः संन्यासी येव मनसो अभिलाषप्रद्वेषौ संन्यस्तौ । यतोऽस्य द्वन्द्वेभ्यः क्रोधमोहादिभ्यो निष्क्रान्ता धीः, स सुखं [1]प्रमुच्यत एव ॥ ३ ॥

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥

---

1. B,K omit प्र-

यत्सांख्यैः प्राप्यते स्थानं तद्योगैरनुगम्यते ।
एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥

सांख्ययोगाविति । यत्सांख्यैरिति । इदं सांख्यं[1], अयं च योगः इति न भेदः । एतौ हि नित्यसंबद्धौ । ज्ञानं न योगेन विना, योगोऽपि न तेन विनेति । अत एकत्वमनयोः ॥ ४-५ ॥

संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥ ६ ॥

संन्यासस्त्विति । तु शब्दः अवधारणे भिन्नक्रमः । योगरहितस्य संन्यासमाप्तुं दुःखमेव; प्राङ्नीत्या कर्मणां दुःखसंन्यासत्वात्[2] । योगिभिस्तु सुलभमेवैतत् इत्युक्तं प्राक् ॥ ६ ॥

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्छृण्वन् स्पृशञ्जिघ्रन् अश्नन् गच्छन् स्वपञ्छ्वसन् ॥८॥

प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥

ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते स न पापेन पद्मपत्रमिवांभसा ॥ १० ॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति संगं त्यक्त्वात्मसिद्धये ॥ ११ ॥

---

1. S सांख्यज्ञानम्
2. S,B,N दुःसंन्यासत्वात्

योगयुक्त इत्यादि आत्मसिद्धये इत्यन्तम्। सर्वभूतानामात्मभूतः आत्मा यस्य, स सर्वमपि कुर्वाणो न लिप्यते, अकरणप्रतिषेधारूढत्वात्। अत एव दर्शनादीनि कुर्वन्नपि असौ एवं धारयति, प्रतिपत्तिदार्ढ्येन निश्चिनुते 'चक्षुरादीनामिन्द्रियाणां यदि स्वविषयेषु प्रवृत्तिः, मम किमायातम्? न हि अन्यस्य कृतेनापरस्य[1] लेपः' इति। तदेव ब्रह्मणि कर्मणा समर्पणम्। अत्र चिह्नम् अस्य गतसङ्गता। अतो न लिप्यते। योगिनश्च केवलैः सङ्गरहितैः परस्परानपेक्षिभिश्च कायादिभिः कुर्वन्ति कर्माणि, सङ्गाभावात्॥ ७-११॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम्।
अयुक्तः कामकारेण फले सक्तो निबध्यते॥ १२॥

युक्त इति। नैष्ठिकीम् अपुनरावर्तिनीम्॥ १२॥

सर्वकर्माणि मनसा सन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही नैव कुर्वन् न कारयन्॥ १३॥

सर्वेति। यथा वेश्मान्तर्गतस्य पुंसो न गृहगतैर्जीर्णत्वादिभिः योगः, एवं मम चक्षुरादिच्छिद्रगवाक्षनवकालंकृतदेहगेहगतस्य न तद्धर्मयोगः॥ १३॥

यतः—

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते॥ १४॥

---

1. S अन्यस्य कृतेनान्यस्य; B अन्यकृतेन परस्य

न कर्तृत्वमिति। एष आत्मा न किंचित् कस्यचित् करोति; प्रवृत्तिस्तु अस्य स्वभावमात्रं, न फलेप्सया। तथाहि— संवेदनात्मनो भगवतः प्रकाशानन्दस्वातन्त्र्यपरमार्थस्वभावस्य स्वभावमात्राक्षिप्तसमस्तसृष्टिस्थितिसंहृतिप्रबन्धस्य स्वस्वभावान्न मनागप्यपायो जातुचित् इति न कर्त्रवस्था, अतिरिक्तं कर्तृत्वं किंचित्। तदभावात् कानि कर्माणि? तदसत्वे कस्य फलम्? को वा कर्मफलसंबन्धः? कर्म अत्र क्रिया, कर्मफलमपि[1] च क्रियाफलमेव। तथाहि— दण्डचक्रपरिवर्तनादिक्रिया बाह्या। न च सा घटनिष्पादिता, संविदन्तर्वर्तित्वात्। [2]अस्माच्चेतनः स्वतन्त्रः परमेश्वर एव तथा तथा भाति इति न तद्व्यतिरिक्तं क्रिया तत्फलादिकमिति सिद्धान्तः॥ १४॥

अत एव क्रियातत्फलयोरभावे विधिफलस्यापि नादृष्टकृतता काचित् इत्यर्थेन अभिधाय, अर्थान्तरेण संसारिणः प्रति तत्समर्थनं कर्तुमाह—

नादत्ते कस्य चित्पापं न चैव सुकृतं विभुः।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः॥ १५॥

नादत्ते इति। पापादीनि नैतत्कृतानि किं तु निजेन अज्ञानेन कृतानि, शङ्कयेव अमृते विषम्[3]॥ १५॥

---

1. S क्रियाफलमपि च कर्म-
2. K तस्मात्; B omits अस्मात् - - सिद्धान्तः
3. B omits पापादीनि - - विषम्

अत एव—

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत् स्वयम् (?) ॥ १६ ॥

ज्ञानेन त्विति । ज्ञानेन तु अज्ञाने नाशिते ज्ञानस्य स्वपरप्रकाशकत्वं[1] स्वतःसिद्धम् —यथा आदित्यस्य तमसि नष्टे, विनिवर्तितायां[2] हि शङ्कायाम् अमृतं अमृतकार्यं स्वयमेव करोति ॥ १६ ॥

एतच्च[3] तद्गतबुद्धिमनसां त्यक्तान्यव्यापाराणां घटत इत्याशयं प्रकटयितुमाह[4]—

[5]तद्बुद्धयस्तदात्मानः तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

यत एवं स्वभावस्तु प्रवर्तते इत्यतो ध्वस्ताज्ञानानामित्थं स्थितिरित्याह—

---

1. K. स्वप्रकाशत्वं
2. B निवर्तितायां
3. K तच्च
4. S,B -तुमुक्तम्
5. Under this verse N adds. तद्बुद्धय इति । अत्रैतदधिकम् ।

'स्मरन्तोऽपि मुहुस्त्वेतत् स्पृशन्तोऽपि न कर्मणि ।
सक्ता अपि न सज्जन्ति पङ्के रविकरा इव ॥' इति

This verse is also found in some of the Sārada MSS and in the Kashmir version of the *Mahābhārata*. See Belvalkar's Critical Ed.

विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥

विद्येति । तथा च तेषां योगिनां ब्राह्मणे न ईदृशी[1] बुद्धिः 'अस्य शुश्रूषादिना अहं पुण्यवान् भविष्यामि' इत्यादि; गवि न 'पावनी इयम्' इत्यादि; हस्तिनि न अर्थादिधीः; शुनि अपवित्रपापकारितादिनिश्चयः; श्वपाके च न पापापवित्रादिधिषणा । अत एव 'समं पश्यन्ति' इति, न तु 'व्यवहरन्ति' इति । तदुक्तम्[2]—

चिद्धर्मा सर्वदेहेषु विशेषो नास्ति कुत्रचित् ।
अतश्च तन्मयं सर्वं भावयन् भवजिज्जनः[3] ॥ इति ।
(*VB*, 100)

अत्रापि भावयन्निति ज्ञानस्यैवेयं धारा उक्ता ॥ १८ ॥

तस्य च इत्थं संभावना इत्याह—

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः ॥ १९ ॥

न प्रहृष्येदिति । एतस्य समदर्शिनः शत्रुमित्रादिविभागोऽपि व्यवहारमात्र एव, नान्तः, ब्रह्मनिष्ठत्वात् ॥ १९ ॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यः सुखम् ।
स ब्रह्म योगयुक्तात्मा सुखमव्ययमश्नुते ॥ २० ॥

---

1. N अनीदृशी
2. K यदुक्तम्
3. B, N भवभिज्जनः

बाह्यस्पर्शे विषयात्मनि सक्तिर्यस्य नास्ति स ह्येवं मन्यते इत्याह—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २१ ॥

ये हीति । स ह्येवं भावयति— 'बाह्यविषयजा भोगाः[1] सर्वे दुःखकारणरूपाः; तथाविधा अपि अनित्याः' ॥ २१ ॥

शक्नोतीहैव यः सोढुं प्राक् शरीरविमोचनात् ।
कामक्रोधोद्भवं वेगं स योगी स सुखी मतः ॥ २२ ॥

शक्नोतीति । न चैतद्दुःशकम्; शरीरान्तकालं यावत् क्रोधकामजो वेगः, क्षणमात्रं, यदि सह्यते तदा आत्यन्तिकी सुखप्राप्तिः ॥ २२ ॥

योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स पार्थ परमं योगं ब्रह्मभूतोऽधिगच्छति ॥ २३ ॥

योऽन्तरिति । अन्तः तस्यान्तरेव [2]बाह्यानपेक्षि सुखं, तत्रैव रमते, तत्र चास्य प्रकाशः; व्यवहारे तु मूढत्वमिव । उक्तं च—

'जड इव विचरेदवादमतिः' इति । (*PS*, 71) ॥ २३ ॥

लभन्ते ब्रह्म निर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २४ ॥

---

1. B,N बाह्यविषयभोगाः ।
2. B omits बाह्यानपेक्षि to व्यवहारे तु ।

लभन्ते इति। एतच्च तैः प्राप्यं, येषां भेदसंशयरूपौ ग्रन्थी विनष्टौ ॥ २४ ॥

कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
सर्वतो ब्रह्म निर्वाणं वर्तते विदितात्मनाम् ॥ २५ ॥

कामेति। तेषां सर्वतः सर्वास्ववस्थासु ब्रह्मसत्ता पारमार्थिकी, न निरोधकालमपेक्षते ॥ २५ ॥

स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २६ ॥

यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २७ ॥

स्पर्शानिति। यतेन्द्रियेति। बाह्यस्पर्शान् बहिः कृत्वा, अनङ्गीकृत्य, भ्रुवोः वामदक्षिणदृष्ट्योः क्रोधरागात्मकयोः अन्तरे तद्रहिते स्थानविशेषे चक्षुरुपलक्षितानि सर्वेन्द्रियाणि [कृत्वा] विधाय, प्राणापानौ धर्माधर्मौ चित्तवृत्त्यभ्यन्तरे साम्येनावस्थाप्य आसीत[1]। नसते कौटिल्येन असाम्येन क्रोधादिवशात् व्यवहरति इति नासा चित्तवृत्तिः। एतदेव बाह्ये। एवंविधो योगी सर्वव्यवहारान् वर्तयन्नपि मुक्त एव ॥ २६-२७ ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २८ ॥

॥ इति श्रीमद्भगवद्गीतायां पञ्चमोऽध्यायः ॥

1. K omits आसीत

भोक्तारमिति । यज्ञफलेषु भोक्ता त्यक्तफलत्वात्[1] । एवं तपस्सु । ईदृशं भगवत्तत्त्वं विदन् यथातथावस्थितोऽपि मुच्यते[2] इति ॥ २८ ॥

॥ शिवम् ॥

अत्रायं संग्रहश्लोकः–

सर्वाण्येवात्र भूतानि समत्वेनानुपश्यतः ।
[3]जडवद्व्यवहारोऽपि मोक्षायैवावकल्पते ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे पञ्चमोऽध्यायः ॥

॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. ६ (व्या) संन्यासमाप्तुं दुःखमेवेति । अत्रेदं विचार्यते– संन्यासस्त्विति प्रथमान्तसंन्यासपदक एव सार्वत्रिको मूलपाठः । परन्तु संन्यासमाप्तुमिति विलिखता आचार्येण अपि नाम द्वितीयार्थे प्रथमा छान्दसी इति सूचितम् ? अथ स्याद्वा आचार्यसमादृतो मूलपाठः 'संन्यासं तु महाबाहो' इत्येव? स्याद्वा संन्यास आप्तुं दुःखमेवेत्येव लिलेखिषितमाचार्येण, यश्च मार्गो व्याख्यात्रन्तराणामपि बहूनाम् ? सर्वत्रापि पक्षे श्रीभास्कराचार्योपदर्शितः संन्यासपदस्य यथाश्रुतार्थकत्वे प्रथमान्तत्वस्य

1. B,N,K(n) भोक्तात्यक्तफलत्वात्
2. S यथा तथा विमुच्यते
3. K(n) जनवत्

साधुत्वानुपपत्तेः तद्भिया तत्पदस्य अर्श आद्यजन्तत्वं परिकल्प्य संन्यास्यर्थकत्वमङ्गीकार्यमिति मार्गो न तथा हृदयङ्गम इति सूच्यत इवाचार्येण ।

प्राङ्नीत्या, प्रागुक्तयुक्त्या ॥

श्लो. ७-११ (व्या) अकरणप्रतिषेधारूढत्वात् इति । क्रियते अधिक्रियते अनेन इति करणं विधिः; प्रतिषिध्यते अनेनेति प्रतिषेधः; तावारूढः, तयोरधिकृतः अज्ञानी; स न भवतीति अकरणप्रतिषेधारूढः; तस्य भावस्तस्मादित्यर्थोऽभिमत इव भाति । मातृकासु सर्वासु न लिप्यते करणप्रतिषेधारूढत्वादिति वर्तते । तत्र करणेत्यतः पूर्वम् अकारः प्रश्लिष्ट इव । अथ वा न प्रश्लिष्टः । करणे प्रतिषेधे च अरूढत्वात् अस्थिरत्वात् अनाग्रहात् इत्यर्थः ॥

श्लो. १४ (व्या) नान्येति । घटादिरूपकार्यादिति शेषः । न च सा घटनिष्पादितेति । न चासौ घटनिष्पादयिता इति विवक्षितमिव । 'अन्यो घटादिरूपकार्यात्' इत्यनुषज्यते ॥

श्लो. १६ (व्या) स्वयमेव करोति इति । एतेनेदं सूचितमिव यत् प्रायश आचार्यः प्रकृतगीताश्लोकचतुर्थपादं 'प्रकाशयति तत् स्वयम्' इति पपाठ इति । परन्तु 'प्रकाशयति तत् परम्' इत्येव सार्वत्रिकः पाठः । अथ वा परमित्यस्यैव स्वयमित्यर्थवर्णनमिति वक्तव्यम् । स्वयमेव करोतीत्यस्य स्वपरप्रकाशकत्वमित्यनेन पूर्वतनेवाप्यन्वयः ॥

श्लो. १८ (व्या) समं पश्यन्ति इति न तु व्यवहरन्ति इति । अनेन मूले समदर्शिन इत्यत्र सममिति दर्शनक्रियाविशेषणमिति सूचितम् ॥

श्लो. २१ (व्या) एवं भावयतीति । तथा च मूले आद्यपादत्रयं बुद्धस्य ज्ञानाकाराभिलापकमिति भावः । तथाविधा अपीति । 'अतथाविधा अपि' इत्येव विवक्षितमिव । अदुःखकारणरूपा अपीति तदर्थः । अथ वा यदि स्थितस्य गतिः कल्पनीया तदा — 'तथाविधत्वं च संस्पर्शजन्यत्वम्; तदेव दुःखकारणत्वेन निर्दिष्टम् । अपि, अपि चेत्यर्थः' इत्येवं रीत्या कथंचित् नेयम् ॥

श्लो. २२ (व्या) न चैतद्दुःशकमित्यादि । अत्र पङ्क्तयस्त्रुटिता इव । न हि क्षणमात्रसाध्योऽतिसुशकः पन्था उपदिश्यते भगवता । अतोऽत्रेदं विवक्षितमिव - 'न चेतत् सुशकम्; दुःशकोऽयं कामक्रोधादिजो वेगः शरीरान्तकालं यावत्— न क्षणमात्रम् — सह्यते यदि, तदा आत्यन्तिकी सुखप्राप्तिः ।' इति । अत्र च संदर्भे

> 'न क्षणमात्रम्, किन्तु प्राक् शरीरविमोचनात्, आ देहपातात्'

इति श्रीभास्कराचार्यव्याख्यानम्; तथा—

'अयं च - - - कष्टतमो दोषः - - - दुर्निवारश्चेति तत्परिहारे यत्नाधिक्यं कर्तव्यमित्याह - - - आ मरणात् - - -'

इति श्रीशङ्कराचार्यव्याख्यानं चानुसंधेयम् ॥

श्लो. २५ (व्या) सर्वास्ववस्थासु ब्रह्मसत्ता पारमार्थिकी इत्यादि। अनेन सर्वतो ब्रह्म निर्वाणं वर्तते इति मूलं व्याख्यातमिव। तथा हि— सर्वतः, सर्वदा इत्यर्थः; सार्वविभक्तिकस्तसिः। वर्तते इति धात्वर्थो वर्तनं सत्ता, सा ब्रह्मेति प्रथमान्तपदार्थब्रह्मकर्तृका। सत्ताया ब्रह्मकर्तृकत्वं च ब्रह्मात्मकत्वमेव। निर्वाणमिति क्रियाविशेषणस्यार्थः सत्तायमभेदेनान्वेति; निर्वाणत्वं च पारमार्थिकत्वम्। कथम्? वा गतिगन्धनयोरित्यदादेर्धातोर्भावे क्तप्रत्यये निष्पन्नस्य वातशब्दस्य गत्यर्थकतया, निर्गतं वातात्— 'निर्वाणोऽवाते (*PA*, VIII, ii, 50) इति तकारस्य णत्वे— इति व्युत्पत्त्या निष्पन्नस्य निर्वाणशब्दस्य सर्वगतिशून्यार्थकत्वात्। एवं च सर्वगमनागमनशून्या अनागमापायिनी पारमार्थिकापरपर्याया ब्रह्मात्मिका सत्ता इत्यर्थलाभः इति॥

वर्तते इति लट्प्रयोगस्वारस्यं दर्शयति - न निरोधकालमपेक्षते इति। चित्तवृत्तिनिरोधकालं नापेक्षते इत्यर्थः। अष्टांगयोगिनो यदा चित्तवृत्तिनिरोधः तदा, तदैव द्रष्टुः स्वरूपेऽवस्थानम्। यतेस्तु वर्तते सर्वास्ववस्थासु ब्रह्मसत्ता इति विशेषः। अथ वा निरोधो नाशमाह। स च शरीरस्येत्यादिः। तथा च शरीरनाशकालं मरणकालं नापेक्षते इत्यर्थः। तार्किकादिमते 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग.' (न्या. सू. II, i, 2) इति रीत्या दुःखात्मकशरीरापायकालमपेक्षतेऽपवर्गः। यतिस्तु अत्र ब्रह्म समश्नुते इति हृदयम्॥

श्लो. २६-२७ (व्या) एतदेव बाह्ये इति । एतत् व्युत्पत्तिप्रदर्शनं बाह्यानां भौतिकानां भ्रूप्राणापानवायुनासानां विषयेऽपि संभवतीत्यर्थः । अथवा एते एव बाह्ये इत्येव लिलेखिषितम् । क्रोधरागौ धर्माधर्मौ इति द्विकद्वये एते एव बाह्ये, न तु स्पर्शादीनि, यतः तानि भगवत्याः संविद आभासरूपाणि । तेषां क्रोधादिसंबन्धादेव, न वस्तुगत्या, बाह्यत्वमिति तात्पर्यम् ॥

श्लो. २८ (व्या) यज्ञफलेषु भोक्ता इति । यज्ञेषु फलभोक्तेति यावत् । यतो वक्ष्यत्यनुपदमेव 'एवं तपस्सु' इति । भोक्ता, पालयिता । कथमित्याह - त्यक्तफलत्वात् इति । त्यक्तं, दत्तं, वितीर्णं फलं, कर्मफलं येन तस्य भावस्तस्मादिति विग्रहः । फलदातृत्वादित्यर्थः । यद्वा भोक्ता, अनुभविता, अनुभवितृत्वेन मतः । कुतः ? त्यक्तफलत्वात्, त्यक्तं समर्पितं फलं यस्मै तस्य भावस्तस्मात् । 'यत् करोषि - - - यज्जुहोषि - - यत्तपस्यसि - - -तत् कुरुष्व मदर्पणम्' इति (IX, 29) वक्ष्यमाणोपदेशानुसारेण संन्यासिना भगवते सर्वसमर्पणात् इति भावः । अथ वा त्यक्तफलत्वात् इत्यस्य विदुष इत्यादिः । तस्यैव प्रकरणात् । उक्तदिशा विदुषा फलस्य त्यक्तत्वात् भोक्ता परमात्मैव मत इति भावः ।

एवं तपस्सु इति । तपःफलविषयेऽप्येवमेवार्थो बोध्य इत्यर्थः ॥

संग्रहश्लोके — मोक्षायैवावकल्पते इत्यत्र 'भक्तिर्ज्ञानाय कल्पते' इत्यादाविव, 'क्लृपि संपद्यमाने च' (*PA*, II, iii, 13, *vārttika* 2) इति चतुर्थी ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां पञ्चमोऽध्यायः ॥

# षष्ठोऽध्यायः

एवं प्राक्तनेनाध्यायगणेन साधितोऽर्थः श्लोकद्वयेन निगद्यते–

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥

यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसंकल्पो योगी भवति कश्चन ॥ २ ॥

अनाश्रित इति । यं संन्यासमिति । कार्यं स्वजात्यादिविहितम् । संन्यासी[1] योगीति पर्यायावेतौ । अत एवाह— यं संन्यासमिति । तथा च योगमन्तरेण संन्यासो नोपपद्यते । एवं संकल्पसंन्यासं विना योगो न युज्यते । तस्मात्सततसंबद्धौ योगसंन्यासौ । न निरग्निरित्यादिना अयमर्थो ध्वन्यते– 'निरग्निश्च न भवति निष्क्रियश्च न भवति; अथ च संन्यासी इत्यद्भुतम्' इति ॥ १-२ ॥

यद्यपि 'द्यूतम्[2] असिंहासननं राज्यम्' इति [रीत्या] युक्त्या च केवलस्य निष्क्रियस्य संन्यासित्वं नोपपद्यते[3] इत्युक्तम् । तथापि—

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥

---

1. S संन्यासीति
2. N हृतम्
3. K उपपद्यते

आरुरुक्षोरिति - मुनेः, ज्ञानवतः; कर्म, करणीयम्; कारणं प्रापकम् । शमः प्राप्तभूमावुपरमः[1] । कारणमत्र लक्षणम् ॥ ३ ॥

एष एवार्थः प्रकाश्यते—

यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥

यदेति । इन्द्रियार्थाः विषयाः; तदर्थानि च कर्माणि विषयार्जनादीनि ॥ ४ ॥

अस्यां च बुद्धौ अवश्यमेवावधेयमित्याह—

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अजितात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

उद्धरेदिति । बन्धुरिति । अत्र च नान्य उपायः, अपि तु आत्मैव, मन एवेत्यर्थः । जितं हि मनो मित्रं घोरतरसंसारोद्धरणं करोति; अजितं तु तीव्रनिरयपातनात् शत्रुत्वं कुरुते ॥ ५-६

तत्र जितमनस इदं रूपम्—

जितात्मनः प्रशान्तस्य परात्मसु समा मतिः ।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥ ७ ॥

जितेति । प्रशान्तो निरहंकारः । परेषु आत्मनि च शीतोष्णादिषु च अभेदधीः, न रागद्वेषौ ॥ ७ ॥

---

1. N,K - भूमावनुपरमः

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकांचनः ॥ ८ ॥

ज्ञानेति । ज्ञानम् अभ्रान्ता बुद्धिः । विविधं ज्ञानं यत्र तत् विज्ञानम् प्राग्युक्त्युदितं कर्म ॥ ८ ॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥

सुहृदिति । सुहृत्, यस्य हृदयम् अकारणमेव शोभनम् । मित्रत्वम् अन्योन्यम् । अरित्वं परस्परम् । उदासीनः, एतदुभयरहितः[1], मध्यस्थः केनचिदंशेन मित्रं केनचिच्छत्रुः । द्वेषार्हो द्वेष्टुमशक्यो[2] द्वेष्यः । बन्धुः योन्यादिसंबन्धेन । एतेषु सर्वेषु समधीः, एवं साधुषु पापेषु च; स च विशिष्यते क्रमात् क्रमं संसारात् तरति ॥ ९ ॥

ईदृशैश्च वन्द्यचरणैः—

इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ १० ॥

इहेति । इहैव, सत्यपि शरीरसंबन्धे सर्गो जितः, साम्यावस्थत्वात् । संसारस्य ह्यबन्धकत्वमेषाम्;[3] साम्ये हि ते प्रतिष्ठिताः । साम्यं च ब्रह्म ॥ १० ॥

---

1. S, N, K (o) एतद्रूपरहितः
2. N द्वेष्टुं शक्यः
3. S, B, K (n) जीवन्मुक्तिरेषां; N जीवन्मुक्तिर्येषां - after अबन्धकत्वम् ।

ननु 'जितात्मनः' इत्युक्तम्, तत्कथं तज्जय? इत्याशङ्क्य आरुरुक्षोः कश्चिदुपायः कायसमत्वादिकः[1] चित्तसंयम उपदिश्यते—

योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ ११ ॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ १२ ॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १३ ॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
संपश्यन् नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १४ ॥

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १५ ॥

युञ्जन्नेवं सदात्मानं मद्भक्तोऽनन्यमानसः।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १६ ॥

योगीत्यादि अधिगच्छतीत्यन्तम्। आत्मानं च, चित्तं च; युञ्जीत, एकाग्रीकुर्यात्। सततमिति - न परिमितं कालम्। एकाकित्वादिषु सत्सु एतद्युज्यते[2] नान्यथा। आसनस्थैर्यात् कालस्थैर्ये[3] चित्तस्थैर्यम्। चित्तक्रियाः संकल्पात्मानः अन्या-

1. S,B,N कायसमुद्धारकः
2. B, N युञ्जीत
3. S, B कालस्थैर्यम्

श्चेन्द्रियक्रिया येन यताः नियमं नीताः। धारयन् यत्नेन। नासिकाग्रस्यावलोकने [सति] दिशामनवलोकनम्। मत्परमतया युक्त आसीत[1] इत्यर्थः[2]। एवमात्मानं युञ्जतः समादधतः शान्तिर्जायते, यस्यां संस्थापर्यन्तकाष्ठा मत्प्राप्तिः[3] ॥११-१६॥

योगोऽस्ति नैवात्यश्नतो न चैकान्तमनश्नतः।
न चातिस्वप्नशीलस्य नातिजाग्रतोऽर्जुन॥ १७॥
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा॥ १८॥

योगोऽस्तीति। युक्ताहारेति। आहारेषु[4] आह्रियमाणेषु विषयेषु[5]। विहारः उपभोगाय प्रवृत्तिः[6]। तस्याश्च युक्तत्वं नात्यन्तासक्तिर्नात्यन्तपरिवर्जनम्। एवं सर्वत्र। शिष्टं स्पष्टम्। 'जागरत' इत्यादि मुनेः प्रमाणत्वात्[7] वेदवत्। एवमन्यत्रापि॥ १७-१८॥

यदा विनियतं चित्तमात्मन्येवावतिष्ठते।
निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा॥ १९॥

यदेति। अस्य च योगिनश्चिह्नम् आत्मन्येव नियतमना न किंचिदपि स्पृहयते॥ १९॥

---

1. N आसीत्
2. S omits इत्यर्थः
3. K —प्राप्तिर्योगोऽस्तीति
4. B,N योऽपि आहारेषु
5. B omits विषयेषु
6. S,K (n) उपयोगाय प्रवृत्तिः
7. N जाग्रत इति मनःप्रमाणत्वात्।

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनि ॥ २० ॥

यथेति । यथा निवातस्थो[1] दीपो न चलति एवं योगी । चलनमस्य विषयादीनामर्जनादयः प्रयासाः ॥ २० ॥

इदानीं तस्य स्वस्वभावस्य ब्रह्मणो बहुतरविशेषणद्वारेण स्वरूपं निरूप्यते [यः] तीर्थान्तरकल्पितेभ्यश्च रूपेभ्यो व्यतिरेकः—

यत्रोपरमते चित्तं निरुद्धं योगसेवनात् ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २१ ॥
सुखमात्यन्तिकं यत् तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २२ ॥
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २३ ॥
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगे(?)ऽनिर्विण्णचेतसा ॥ २४ ॥

यत्रेत्यादि अनिर्विण्णचेतसा इत्यन्तम् । यत्र मनो निरुद्धम् उपरमते - स्वयमेव । आत्यन्तिकं, विषयकृतकालुष्याभावात्, सुखं यत्र वेत्ति । अपरो लाभो धनदारपुत्रादीनां संनियोग-लब्धश्च योगः; अन्यत्र सुखधीर्निवर्तते च इति वस्तुस्वभावोऽय-मित्यर्थः । न विचाल्यते, विशेषेण न चाल्यते; अपि तु संस्कारमात्रेणैवास्य प्रथमक्षणमात्रमेव चलनं कारुण्यादिवशात् न तु मूढतया 'विनष्टो बताहम् । किं मया प्रतिपत्तव्यम्'

1. S omits निवातस्थो

इत्यादि । दुःखसंयोगस्य वियोगो यतः, स च निश्चयेन आस्तिकताजनितया श्रद्धया सर्वथा योक्तव्यः अभ्यसनीयः । अनिर्विण्णम् उपेयप्राप्तौ; दृढतरं संसारं दुःखबहुलम् प्रति निर्विण्णं वा[1] चेतो यस्य ॥ २१-२४ ॥

कामानां त्यागे[2] उपायः संकल्पत्याग इत्याह—

संकल्पप्रभवान् कामांस्त्यक्तुं (?) सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ २५ ॥
शनैः शनैरुपरमेद् बुद्धया धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ २६ ॥

संकल्पेति । शनैः शनैरिति । मनसैव, न[3] व्यापारोपरमेण । धृतिं गृहीत्वा क्रमात् क्रममभिलाषदुःखं प्रतनूकृत्य, किंचिदपि विषयाणां त्यागग्रहणादिकं न चिन्तयेत् ।

यत्तु[4] अन्यैर्व्याख्यातम् 'नकिञ्चिदपि चिन्तयेत्' इति, तन्नास्मभ्यं रुचितम् । शून्यवादप्रसंगात् ॥ २५-२६ ॥

न च विषयव्युपरममात्रमेव प्राप्यमित्युच्यते—

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २७ ॥
प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ २८ ॥

---

1. S,N omit वा
2. S,B,N कामानामुपायत्यागे
3. S,B omit न
4. S यथात्वन्यैर् ; B यथा तु कैश्चिद्

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
सुखेन ब्रह्मसंयोगमत्यन्तमधिगच्छति ॥ २९ ॥

यत इत्यादि अधिगच्छतीत्यन्तम् । यतो यतो मनो निवर्तते तन्निवर्तनसमनन्तरमेव आत्मनि शमयेत् । अन्यथा अप्रतिष्ठं चित्तं पुनरपि विषयानेवावलम्बते । तत्र आत्मनि शान्तचित्तं योगिनं कर्मभूतं सुखं कर्तृभूतम् उपैति । अनेनैव क्रमेण योगिनां सुखेन ब्रह्मावाप्तिः, न तु कष्टयोगादिनेति तात्पर्यम् ॥ २७–२९ ॥

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ ३० ॥

सर्वेति । सर्वेषु भूतेषु आत्मानं ग्राहकतया[1] अनुप्रविशन्तं भावयेत् । आत्मनि च ग्राह्यताज्ञानद्वारेण सर्वाणि भूतानि एकीकुर्यात् । अतश्च समदर्शनत्वं जायते[2] योगश्चेति संक्षेपार्थः । विस्तरस्तु भेदवादविदारणादिप्रकरणे देवीस्तोत्रविवरणे च मयैव निर्णीत इति तत्रैवावधार्यः[3] ॥ ३० ॥

एष एवार्थः स्पष्टीक्रियते[4]—

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३१ ॥

---

1. K ग्राहकरूपतया
2. B ज्ञायते
3. S,K तत एवाव–
4. K omits this sentence.

थो मामिति। प्रणाशः, अकार्यकारित्वात्[1]। तथाहि–परमात्मनः सर्वगतं रूपं यो न पश्यति तस्य परमात्मा पलायितः स्वरूपप्रकटीकाराभावात्। यच्चेदं[2] वस्तुजातं [तत्] तद्भासनात्मनि परमात्मनि[3] निर्विष्टं भाति[4]; तथाविधं यो न पश्यति स परमात्मस्वरूपात् प्रणष्टः, तद्व्यतिरेके सति अविभासनात्। यस्तु सर्वगतं मां पश्यति तस्याहं न प्रणष्टः, स्वरूपेण भासनात्। भावांश्च मयि पश्यति तत् तेषां भासनोपपत्तौ द्रष्टृतायां परिपूर्णायां, स न प्रणष्टः परमात्मनः ॥ ३१ ॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः।
सर्वथा वर्तमानोऽपि स योगी नैव लिप्यते (?) ॥ ३२ ॥

सर्वेति। यस्त्वेवं ज्ञानाविष्टः सोऽवश्यमेव[5] एकतया भगवन्तं सर्वगतं विदन् सर्वात्स्यागतोऽपि न लिप्यते ॥ ३२ ॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३३ ॥

आत्मौपम्येनेति। सर्वस्य च सुखदुःखे आत्मतुल्यतया पश्यतीति स्वरूपमेतदनूदितम् न पुनरेषोऽपूर्वो विधिः ॥ ३३ ॥

अर्जुन उवाच—

योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।
एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं पराम् ॥ ३४ ॥

1. S —कारकत्वात्
2. N यश्चेदम्
3. B omits परमात्मनि
4. S,K विनिविष्टं भाति (K भवति)
5. B,N ज्ञानाविष्टोऽसाववश्यमेव; S - वश्यमेकतया

चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३५ ॥

योऽयमिति । चञ्चलमिति । यः अयम् इति परोक्षप्रत्यक्षवाचकाभ्यामेवं सूच्यते – भगवदभिहितानन्तरोपायपरम्परया स्फुटमपि प्रत्यक्षनिर्दिष्टमपि ब्रह्म मनसः चाञ्चल्यदौरात्म्यात् सुदूरे वर्तते[1] इति परोक्षायमाणम् । प्रमथ्नाति दृष्टादृष्टे बलवत् शक्तम् । दृढ, दुष्टव्यापारात्[2] वारयितुम् अशक्यम् ॥३४-३५॥

अत्र उत्तरम्

श्रीभगवानुवाच—

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ३६ ॥

असंशयमिति । वैराग्येण विषयोत्सुकता विनाश्यते । अभ्यासेन मोक्षपक्ष. क्रमात् क्रमं विषयीक्रियते इति द्वयोरुपादानम् । उक्तं च तत्रभवता भाष्यकृता–

'उभयाधीनश्चित्तवृत्तिनिरोध.' इति ॥ ३६ ॥

अत एषा प्रतिज्ञा—

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३७ ॥

असंयतेति । असंयतात्मनः अविरक्तस्य न कथंचिद्योगावाप्तिः । वश्यात्मनेति, वैराग्यवता । यतमानेनेति, साभ्यासेन । [उपायतः] उपायान् अनेकसिद्धान्तादिशास्त्रविहितान् संश्रित्य ॥३७॥

1. N. सुदूरीक्रियते
2. N दृष्टव्यापारात्

अर्जुन उवाच—

अयतः श्रद्धयोपेतः योगाच्चलितमानसः ।
लिप्समानः सतां मार्गं प्रमूढो ब्रह्मणः पथि ॥ ३८ ॥
अनेकचित्तो विभ्रान्तो मोहस्यैव वशं गतः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३९ ॥
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो विनाशं वाधिगच्छति ॥ ४० ॥
एतन्मे संशयं कृष्ण च्छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य च्छेत्ता न ह्युपपद्यते ॥ ४१ ॥

अयतः इत्यादि नह्युपपद्यते इत्यन्तम् । प्राप्ताद्योगात् यदि[1] चलितेऽपि चित्ते श्रद्धा न हीयते । विनष्टश्रद्धो हि सिद्धयोगोऽपि सर्वं निष्फलं कुरुते । उक्तं हि–

यदा प्राप्यापि विज्ञानं दूषितं चित्तविभ्रमात् ।
तदैव[2] ध्वंसते शीघ्र तूलराशिरिवानलात् ॥

योगस्य सम्यक् सिद्धौ अजातायां किं लोकान्निष्क्रान्तः सम्यक् च ब्रह्मणि न निलीन[3] इति नश्येत्? अथवा ब्रह्मणि अप्रतिष्ठितत्वात् विनश्यति परलोकबाधाय? इति प्रश्नः॥३८-४१॥

अत्र निर्णयम्[4]

श्रीभगवानुवाच—

पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत् कश्चिद्दुर्गतिं तात गच्छति ॥ ४२ ॥

---

1. B, N यस्य instead यदि 2. B तदैवम्
3. K न लीन इति 4. S निर्णयः

पार्थेति । न तस्य योगभ्रष्टस्य इह लोके परलोके[1] वा वाशोऽस्ति, अनष्टश्रद्धत्वात् इति भावः[2] । स हि कल्याणं भगवन्मार्गलक्षणम् कृतवान् । न च तत् अग्निष्टोमादिवत् क्षयि ॥ ४२ ॥

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४३ ॥

प्राप्येति । शाश्वतस्य विष्णोः, समाः, वैष्णवानि त्रीणि बर्षाणि । शुचीनामिति, येषां भगवदंशस्पर्शि चित्तम् ॥ ४३ ॥

अथ वा योगिनामेव जायते धीमतां कुले ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४४ ॥

अथ वे ति । यदि तु तारतम्येन अस्य अपवर्गेण भवितव्यं तदा योगिकुले एव जायते । अत एवाह 'एतद्धि दुर्लभतरम्' इति । श्रीमतां गेहे किन्नावश्यमेव विघ्नाः सन्ति ॥४४॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
ततो भूयोऽपि यतते संसिद्धौ कुरुनन्दन ॥ ४५ ॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सन् ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४६ ॥

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४७ ॥

---

1. S परत्र
2. K adds तस्य लोकद्वयाविनाशिनः after भावः

तत्रेत्यादि परां गतिमित्यन्तम् । संसिद्धौ मोक्षात्मिकायाम् । अवशः, परतन्त्र एव किल तेन पूर्वाभ्यासेन बलादेव योगाभ्यासं प्रति नीयते । न चैतत् सामान्यम् । योगजिज्ञासामात्रेणैव हि शब्दब्रह्मातिवृत्तिः, मन्त्रस्वाध्यायादिरूपं च शब्दब्रह्म अतिवर्तते, न स्वीकुरुते ।

ततः जिज्ञासानन्तरम् यत्नवान् अभ्यासक्रमेण देहान्ते वासुदेवत्वं प्राप्नोति । न चासौ तेनैव देहेन सिद्ध इति मन्तव्यम् । अपि तु बहूनि जन्मानि तेन तदभ्यस्तमिति मन्तव्यम् । अत एव यस्य अनन्यव्यापारतया भगद्व्यापारानुरागित्वं स योगभ्रष्ट इति निश्चेयम्[1] ।। ४५ - ४७ ।।

योगस्य प्राधान्यमाह—

तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ।। ४८ ।।

तपस्विभ्य इति । तपस्विभ्यः अधिकत्वं पूर्वमेव सूचितम् । ज्ञानिभ्यः अधिकत्वं, ज्ञानस्य योगफलत्वात् । कर्मिभ्य उत्कर्षः स एव कर्माणि कर्तुं वेत्ति ।। ४८ ।।

न च निरीश्वरं कष्टयोगमात्रं संसिद्धिदं इति उच्यते –

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ।। ४९ ।।

।। इति श्रीमद्भगवद्गीतायां षष्ठोऽध्यायः ।।

---

1. B, N निश्चेयः

योगिनामपीति । सर्वयोगिमध्ये य एव मामन्तःकरणे निवेश्य भक्तिश्रद्धातत्परो गुरुचरणसेवालब्धसंप्रदायक्रमेण मामेव नान्यत्[1] भजते विमृशति[2], स [मे] युक्ततमः परमेश्वरसमाविष्ट[3] । इति सेश्वरस्य ज्ञानस्य सर्वप्राधान्यमुक्तम् इति ॥४९॥

॥ शिवम् ॥

अत्र संग्रहश्लोकः–

भगवन्नामसंप्राप्तिमात्रात्सर्वमवाप्यते ।
फलिताः शालयः सम्यग्वृष्टिमात्रेऽवलोकिते ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे षष्ठोऽध्यायः ॥

## ॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. ३ (व्या) कारणमत्र इति । योगमारुरुक्षोः योगारूढस्य च नित्यतया तस्य कारणमिति वचनमसङ्गतप्रायमिति मत्वा मूले पूर्वार्धगतं कारणपदम् 'आरुरुक्षोः प्रापणीयप्राप्तिकारणम्' इति व्याख्याय अत्र प्रकृते उत्तरार्धे कारणपदं योगारूढविशेष्यकेतरव्यावृत्तिप्रकारकज्ञानकारणपरमित्यभिप्रायेण व्याचष्टे —लक्षणमिति ।

श्लो. ७ (अ) तत्र, जिताजितमनसोर्मध्ये ।

---

1. N नान्यम्
2. S,N omit विमृशति; K substitutes विमृश्यते
3. S omits परमेश्वरसमाविष्टः

श्लो. ८ (मू) कूटस्थ इति। कूटः गिरिशृङ्गं, तद्वत् रागद्वेषादिमेघेभ्यः औन्नत्येन अचांचल्येन च तिष्ठतीति कूटस्थः।

(व्या) प्राग्युक्त्युदितमिति। प्राक् पूर्वतनग्रन्थे युक्त्या युक्तिपूर्वकम् उदितम्, उक्तमित्यर्थः॥

श्लो. ९ (व्या) संसारात्तरतीति। संसारादुत्तरतीत्यर्थः।

श्लो. ११-१६ (अ) चित्तसंयम इति। चित्तं संयमयति इति चित्तसंयमः। उपायविशेषणमेतत्। अथवा चित्तसंयमे इति च्छेदः। निमित्तात् कर्मयोगे सप्तमी। चित्तसंयमार्थमित्यर्थः।

(व्या) कालस्थैर्ये इति। कालविधायकस्य नाडीकोशस्य अष्टाङ्गयोगशास्त्रप्रसिद्धस्य स्थैर्ये सतीत्यर्थः। अथवा अपि 'कायस्थैर्ये' इति विवक्षितम्?

श्लो. १९ (व्या) न किंचिदपि स्पृहयते इति। किंशब्दार्थस्य ईप्सिततमत्वविवक्षया कर्मसंज्ञा परा सती पूर्वां 'स्पृहेरीप्सितः' ( *PA*, I, iv, 36) इति प्राप्तां संप्रदानसंज्ञां बाधते इति बोध्यम्। न कमपि विषयमतिशयेन इच्छति आत्मार्थमिति व्यज्यते, आत्मनेपदस्वारस्यात्। तथा च लोकसंग्रहार्थं कस्मैचित् स्पृहाम् ईषत् करोति इति तात्पर्यम्॥

श्लो. २१-२४ (अ) व्यतिरेक इति। 'अस्य स्वरूपस्य' इत्यादिः।

(व्या) उपेयप्राप्ताविति योगपदार्थविवरणमिव। अपि नामेदं सूचयति–यत् चतुर्विंशे पद्ये चतुर्थपादम् 'योगेऽनिर्विण्ण-

चेतसा' इत्याचार्यः प्रायशः पपाठ इति ? कुतः? एतच्छ्लोकावतरणिकायामाचार्यैः 'एषु श्लोकेषु बहुतरविशेषणैः ब्रह्मस्वरूपं निरूप्यते' इत्युक्ततया तदनुसारेण 'तं विद्यात्' 'स योक्तव्य.' इत्यनयोः क्रमशः 'तमात्मानं विद्यात्' 'स आत्मा अभ्यसनीयः' इत्यर्थस्य वर्णनीयत्वात्, तत्र च 'योग.' इति प्रथमान्तपाठस्य सार्वत्रिकस्य न सम्यगाञ्जस्यं भवतीति भाति। योगे इत्यस्य योगे संबन्धे, अर्थात् प्रकरणाच्च चिदात्मनः संबन्धे प्राप्तौ सत्यामित्यर्थः। अथ वा यदि प्रथमान्तपाठे आग्रहः तदा परचिदात्मनो योगगम्यत्वात् योगत्वोपचार इत्यादिरीत्या नेयम्।

योगेऽनिर्विण्णचेतसा इति मूले अनिर्विण्णचेतसा इति पदविभागमाश्रित्य तदर्थम् 'अनिर्विण्णम् उपेयप्राप्तौ' इत्यादिग्रन्थेन वर्णयित्वा, 'निर्विण्णचेतसा' इति पदविभागमाश्रित्यापि तत्तात्पर्यमाह—दृढतरमित्यादिना॥

श्लो. २५-२६ (अ) कामानां त्यागे उपाय इति। आचार्यस्य वचनमिदमेवं संसूचयतीव, यत् गीतायां पंचविंशे पद्ये द्वितीयपादे 'कामांस्त्यक्तुम्' इति आचार्यः पपाठ इति। परन्तु सार्वत्रिकः रामकण्ठीयश्च पाठः 'कामांस्त्यक्त्वा' इत्येव।

(व्या) त्यागग्रहणादिकं न चिन्तयेत् इति। एतदादिकं संकल्पं न कुर्यादित्यर्थः। तथा च संकल्पप्रभवाः कामा नोत्पत्स्यन्ते इति तात्पर्यम्॥

श्लो. २७-२९ (अ) न चेति। न चैवेत्यन्वयः। प्राप्यमिति। प्राप्तव्यमित्यर्थः।

(व्या) अवलम्बते इति । अवलम्बेतेति यावत् ।

कष्टयोगादिनेति । कष्टसाध्येन निरीश्वरेण योगादिनेत्यर्थः। वक्ष्यति च (श्लो ४९,अवतारिकायाम्) 'न च निरीश्वरं कष्टयोगमात्रं संसिद्धिदम्' इति ।।

श्लो. ३० (व्या) आत्मनीति सप्तम्यर्थाधिकरणत्वस्य ग्राह्यतायां धात्वर्थे एकीकरणे चान्वयः । ग्राह्यतेति । तद्ग्राह्यतेत्यर्थः । तत्पदवाच्य आत्मा ॥

श्लो. ३१ (व्या) भावांश्च मयि पश्यति इति । य इति पूर्ववाक्यादनुषज्यते । तत् तेषामिति । तस्मात् कारणात् तेषां भावानामित्यर्थः ।।

श्लो. ३२ (व्या) न लिप्यते इति । एतेन इदं ज्ञायते यत् प्रकृतगीताश्लोके चतुर्थपादं 'स योगी नैव लिप्यते' इति पपाठेव, न तु 'स योगी मयि वर्तते' इति यश्च पाठः सार्वत्रिकः रामकण्ठीयश्च । अथवा मयि वर्तते इत्यस्याहंविमर्शात्मवि निर्लेपे चिदात्ममात्रे प्रतिष्ठितो भवति इत्यर्थं मनसि कृत्वा तादृशप्रतिष्ठायाः फलं दर्शयति - नैव लिप्यते इति ।।

श्लो. ३४ (मू) साम्येनेति । साम्यं च समदर्शनमेव । तृतीयार्थ. अभेदः योगेऽन्वेति ।

(व्या) योऽयमित्यादि, परोक्षायमाणमित्यादि। यद्यपि योऽयमिति मूलेन साम्याभिन्नो योगो दर्शितः । तथापि 'साम्यं च ब्रह्मैव' इति तत्र ब्रह्मात्मकसाम्ययोगस्यैव निर्देशः, अर्थात्

ब्रह्मण एव निर्देश इति पश्यतः आचार्यस्यैवं विलिखनसंगतिरिति भाति ॥

श्लो. ३७ (व्या) उपायान् --- संश्रित्येति । तथा च मूले उपायतः इति पञ्चम्यास्तसिः; पञ्चमी च ल्यब्लोपे कर्मणि च बोध्या इत्यभिप्रायः ॥

श्लो. ३८-४१ (व्या) यदि इति । अस्य च न हीयते इत्यनेनान्वयः ।

परलोकबाधाय इति । –बाधायाम् इति विवक्षितमिव । सति सप्तमी । अप्रतिष्ठितस्य कृते परलोकस्यापि बाधितत्वादिति अभिप्रायः ॥

श्लो. ५-४७ (व्या) जिज्ञासुरपि इति मूले अपिः एवकार्थे । तथा च 'बलवानेव जयति' इत्यादौ बलमात्रस्य जयहेतुत्वमिवात्रापि जिज्ञासामात्रस्य शब्दब्रह्मातिवर्तनहेतुत्वमिति दर्शयति व्याख्यायां योगजिज्ञासामात्रेणैवेति ।

(व्या) शब्दब्रह्मेति मूलस्य बृंहति वर्धयति - बृहि वृद्धौ इति धातुः भ्वादिः अत्र अन्तर्भावितण्यर्थः - इति ब्रह्म; शब्दस्य मन्त्रात्मकस्य वर्धक इति व्युत्पत्त्या मन्त्रशब्दवर्धको व्यापारविशेषो मन्त्रस्वाध्यायरूप इत्यर्थः । तदाह व्याख्यायां– मन्त्रस्वाध्यायादिरूपमिति । आदिना कर्मानुष्ठानसंग्रहः; स्वाध्यायस्यास्वीकारे तत्प्रयुक्तकर्मानुष्ठानस्याप्यसंग्रहात् ॥

श्लो. ४९ युक्ततम इति मूलम्। युक्तानां मध्ये उत्तम इति तदर्थः। तस्योत्तमत्वं च तदीययोगस्योत्तमत्वाधीनम्। उत्तमोत्तमो योगश्च परमेश्वरसमावेशरूपः। तथा च फलितार्थमाह व्याख्यायां - परमेश्वरसमाविष्ट इति। सेश्वरस्य ज्ञानस्य, सेश्वरस्य ज्ञानयोगस्येत्यर्थः। तथा च अवतरणिकया एकवाक्यता॥

संग्रहश्लोके - भगवन्नामेति। एवमेव पठन्ति सर्वा मातृकाः। महाभारतमातृकास्वपि कासुचित् इदं पद्यम् एतदध्यायान्ते संग्रहश्लोकत्वेन समुद्धृतमिति शोधितप्रकाशितमहाभारतपुस्तके पश्यामः। तत्रापि भगवन्नामेत्येव पाठः। परन्तु प्रकृतं न भगवन्नामप्रकरणम्; अपि तु परमेश्वरसमावेशयोगप्रकरणम्। एवं च कच्चिदाचार्येण भगवन्मानसंपत्तिमात्रादित्येव लिलेखिषितम्? भगवति मानः चित्तसमुन्नतिः, या च 'यत्रोपरमते चित्तम्' इत्यादिना 'आत्मन्येव वशं नयेत्' इत्यन्तेन भागेन प्रकृताध्यायहृदयभूतेनोपदिष्टा, तस्याः संपत्तिमात्रात् सर्वं सुखमुत्तममवाप्यते योगिना इति संग्रहश्लोकार्थः। अथ वा भगवन्नामेत्येव पाठः। भगवान् इति नाम आख्या यस्य तस्य प्राप्तिः, भगवन्नाम्नी या प्राप्तिः इति वार्थः॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां षष्ठोऽध्यायः॥

# सप्तमोऽध्यायः

श्रीभगवानुवाच—

मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रितः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥ १ ॥

ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा न पुनः किंचिज्ज्ञातव्यमवशिष्यते ॥ २ ॥

मय्यासक्तेति, ज्ञानमिति । ज्ञानविज्ञाने ज्ञानक्रिये एव । ततो न किञ्चिदवशिष्यते, सर्वस्य ज्ञेयजातस्य ज्ञानक्रियानिष्ठत्वात् । १-२ ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ३ ॥

मनुष्याणामिति । अस्य च वस्तुनः सर्वो न योग्यः इत्यनेन दुर्लभत्वात् यत्नसेव्यतामाह[1] ॥ ३ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥ ४ ॥

अपरेयमितोऽनन्यां (?) प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

---

1. N यत्नः सेव्यतामित्याह ।

भूमिरिति । अपरेति । इयमिति प्रत्यक्षेण या संसारावस्थायां सर्वजनपरिदृश्यमाना सा चैकैव सती प्रकाराष्टकेन भिद्यते इति एकप्रकृत्यारब्धत्वादेकमेव विश्वमिति प्रकृतिवादेऽपि अद्वैतं प्रदर्शितम् । सैव जीवत्वं पुरुषत्वं प्राप्ता परा ममैव नान्यस्य च । [1]सा उभयरूपा वेद्यवेदकात्मकप्रपञ्चोपरचनविचित्रा, तत एव स्वात्मविमलमुकुरतलकलितसकलभावभूमिः स्वस्वभावात्मिका सततमव्यभिचारिणी प्रकृतिः । इदं जगत्, भूम्यादि ॥ ४-५ ॥

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥
मत्तः परतरं नान्यत् किंचिदस्ति धनञ्जय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥

एतद्योनीनि इति । मत्तः इति । उपधारय— अभ्यासाहितानुभवक्रमेण[2] आत्मसमीपे कुरु । एवं च त्वमेवोपधारय यत् 'अहं वासुदेवो भूतः[3] सर्वस्य प्रभवः प्रलयश्च' । अहम्[4] इत्यनेन प्रकृतिपुरुषपुरुषोत्तमेभ्यो व्यतिरिक्तोऽपि ईश्वरः सर्वथा सर्वानुगतत्वेन स्थित इति सांख्ययोगयोर्नास्ति भेदवादः इति प्रदर्शितम् । सूत्रे मणिगणा इव —यथा तन्तुरनवधियमाणरूपोऽपि अन्तर्लीनतया स्थितः, एवमहं सर्वत्र ॥ ६-७ ॥

---

1. S omits सा
2. B अभ्यासानुभव-
3. ~~S,K वासुदेवोभूतः~~
4. B,N omit the sentence अहं ... प्रदर्शितम्

रसोऽहमप्सु कौन्तेय प्रकाशः शशिसूर्ययोः ।
प्रणवः सर्ववेदे यः (?) शब्दः खे पौरुषं नृषु ॥ ८ ॥

रसोऽहमप्स्विति । सर्वत्रास्वाद्यमानो योऽनुद्भिन्न[1]मधुरादिविभागः सामान्यः सोऽहम् । एवं प्रकाशः मृदुत्वचण्डत्वादिरहितः । खे आकाशे । यः शब्द इति सर्वस्यैव शब्दस्य नभोगुणत्वात् अत्रावधारणम् । [अथवा] यः केवलं[2] गगनगुणया ध्वनिसंयोगविभागादिसामग्र्यन्तररहितः अवहितहृदयैः ब्रह्मगुहागगनगामी योगिगणैः संवेद्यः अनाहताख्यः सकलश्रुतिग्रामानुगामी[3] तत् भगवतस्तत्त्वम् । पौरुषम्, येन तेजसा पुरुषोऽहं(य)मिति सार्वभौमं प्रतिपद्यते[4] ॥ ८ ॥

पुण्यः पृथिव्यां गन्धोऽस्मि तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥

पुण्य इति । यो धरायां[5] केवलधर्मतया गन्धगुणः स स्वभावपुण्यः । पूत्युत्कटादीनि[6] तु भूतान्तरसंबन्धात् । उक्तं च—

दृढं भूमिगुणाधिक्याद् दुर्गन्धमग्निगुणोदयात् ।
जडमम्बुगुणोदार्यात् .......

इत्यादि ॥ ९ ॥

1. N मानयोरनुद्भिन्न-
2. S,B,N केवलगगन-
3. B श्रुतिमार्गानुगामी
4. N प्रतिपाद्यते
5. S,B धरायाः
6. S,B,N प्रत्युत्कटत्वादीनि

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥

बलं बलवतामस्मि कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥

बीजमिति । बलमिति । बीजं सूक्ष्ममादिकारणम्[1] । कामरागविवर्जितं बलं सकलवस्तुधारणसमर्थम् ऊर्जोरूपम्[2] । कामः[3] इच्छा संविन्मात्ररूपा, यस्या घटपटादिभिर्धर्मरूपैर्नास्ति विरोधः । इच्छा हि सर्वत्र भगवच्छक्तितया अनुयायिनी न क्वचिद्विरुध्यते, धर्मस्तु आगन्तुकैर्घटपटादिभिर्भिद्यते[4] इति तदुपासकतया शुद्धसंवित्स्वभावत्वं ज्ञानिनः । उक्तं च शिवोपनिषदि—

'इच्छायामथ वा ज्ञाने जाते चित्तं निवेशयेत्' (*VB*, 98)इति

जाते एव न तु बाह्यप्रसृते इत्यर्थः । एवं व्याख्यानं त्यक्त्वा ये 'परस्परानुपघातकं त्रिवर्गं सेवेत' इत्याशयेन व्याचक्षते, ते संप्रदायक्रममजानानाः भगवद्रहस्यं च व्याचक्षाणा नमस्कार्या एव ॥ १०-११ ॥

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥

---

1. B सूक्ष्मादिकारणम्
2. B omits रूपम्
3. S omits कामः
4. S घटादिभिर्भि-

त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥

ये चेति । त्रिभिरिति । सत्त्वादीनि मन्मयानि, न त्वहं तन्मयः । अत एव च भगवन्मयः सर्वं भगवद्भावेन संवेदयते, न तु नानाविधपदार्थविज्ञाननिष्ठो भगवत्तत्त्वं प्रतिपद्यते इति सकलमानसावर्जक एष क्रमः । अनेनैव चाशयेन वक्ष्यते 'वासुदेवः सर्वम्' इति[1] ज्ञानेन यो बहुजन्मोपभोगजनितकर्मसमतासमनन्तरसमुत्पन्नपरशक्तिपातानुगृहीतान्तःकरणः असौ प्रतिपद्यते भगवत्तत्त्वं[2] 'ननु[3] सर्वं वासुदेवः' इति बुद्धया, स महात्मा स च दुर्लभ इति । एवं ह्यबुद्धयमानं,[4] प्रत्युत सत्त्वादिभिर्गुणैः मोहितमिदं जगत् गुणातीतं वासुदेवतत्त्वं नैवोपलभते ॥१२-१३

कथं खलु सत्त्वादिमात्रस्थिता भगवतस्तत्त्वं न विदुः इत्याह—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥

दैवीति । देवः क्रीडाकरः, तत्र भवा दैवी क्रीडा ममेयमित्यर्थः । तेन सत्त्वादीनां वस्तुतः संविन्मात्रपरब्रह्मानतिरिक्ततायामपि यत् तदतिरिक्ततावगमनं[5] तदेव गुणत्वं भोक्तृतत्त्वपारतन्त्र्यं भोग्यत्वम् । तच्च भेदात्मकं रूपं संसारिभिरनिर्वा-

---

1. K adds another इति
2. S, B omits भगवत्तत्त्वम्
3. K omits ननु
4. B, N हि बुद्धयमानम्
5. B.N तदतिरिक्तभावगमनम्

च्यतया तान् प्रति मायारूपम् । अतो ये परमार्थब्रह्मप्रकाशविदः ते तदनतिरिक्तं विश्वं पश्यन्तो गुणानां सत्त्वादीनां गुणतालक्षणां भेदावभासस्वभावां मायाम् अतितरन्ति इति 'मामेव' इत्येवकारस्याशयः । ये तु यथास्थितं[1] भेदावभासमात्रं विदुः, ते मायां नातिक्रामन्ति[2] । तद्युक्तमुक्तम् 'न त्वहं तेषु' इति॥१४॥

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययापहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥

न मामिति । ये च मां सत्यपि[3] अधिकारिणि कार्ये नाद्रियन्ते ते दुष्कृतिनः नराधमाः मूढाः, आसुराः तामसाः इति मायामहिमैवायम् ॥ १५ ॥

चतुर्विधा भजन्ते मां जनाः सुकृतिनः सदा ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतः ।
आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥

---

1. B यथास्थितमेव—
2. S नातिवर्तन्ते
3. S omits अपि

चतुर्विधा इत्यादि सुदुर्लभ इत्यन्तम् । ये तु मां भजन्ते, ते सुकृतिनः । ते च चत्वारः । सर्वे चैते उदाराः । यतः अन्ये कृपणबुद्धयः आर्तिनिवारणम् अर्थादि च तुल्यपाणिपादोदर-शरीरसत्त्वेभ्योऽधिकतरं वा आत्मन्यूनेभ्यो मार्गयन्ते । ज्ञान्य-पेक्षया तु [ते] न्यूनसत्त्वाः, यतः तेषां तावत्यपि भेदोऽस्ति 'भगवतः इदमहमभिलष्यामि' इति भेदस्य स्फुटप्रतिभासात् । ज्ञानी तु मामेवाभेदतया अवलम्बते इति[1] ततोऽहमभिन्न एव । तस्य च अहमेव प्रियः न तु फलम् । अत एव स 'वासुदेव एव सर्वम्' इत्येव[2] दृढप्रतिपत्तिपवित्रीकृतहृदयः ॥ १६-१९ ॥

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥

स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥ २२ ॥

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥

कामैरित्यादि मामपीत्यन्तम् । ये पुनः स्वेन स्वेनोत्त-मादिकामनास्वभावेन विचित्रेण परिच्छिन्नमनसस्ते कामनाप-हृतचेतनाः[3] तत्समुचितामेव ममैवावान्तरतनुं देवताविशेषमुपा-

1. S omits इति
2. S वासुदेवः सर्वमेवम्
3. B,N—चेतसः

सते । अतो मत एव कामफलमुपादत्ते[1] । किं तु तस्यान्तोऽस्ति, निजयैव वासनया परिमितीकृतत्वात् । अत एवेन्द्रादिभावनातात्पर्येण यागादि कुर्वन्तस्तथाविधमेव फलमुपाददते । मत्प्राप्तिपरास्तु मामेव ॥ २०-२३ ॥

ननु सर्वगते भगवतत्त्वे किमिति देवतान्तरोपासकानां मितं फलम् ? उच्यते—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ २४ ॥

अव्यक्तमिति । ते खलु अल्पबुद्धित्वात् मत्स्वरूपं पारमार्थिकम् अविद्यमानव्यक्तिकं न प्रत्यभिजानीते । अपि तु निजकामनासमुचिताकारविशिष्टज्ञानस्वभाव[2] व्यक्तिमेवापन्नं विदन्ति नान्यथा । अत एव न नाम्नि आकारे वा कश्चिद्ग्रहः । किंतु सिद्धान्तोऽयमत्र—यः कामनापरिहारेण यत्किञ्चिद्देवतारूपमालम्बते तस्य तत् शुद्धमुक्तभावेन[3] पर्यवस्यति । विपर्ययात्तु विपर्ययः[4] ॥ २४ ॥

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥
वेदाहं समतीतानि वर्तमानानि चार्जुन ।
भविष्यन्ति च भूतानि मां तु वेद न कश्चन ॥ २६ ॥

---

1. S—पासते
2. B,N स्वभावां
3. S B -मुक्तभावे
4. S,B,N add इति

नाहमिति । वेदाहमिति । सर्वेषां वाहं गोचरतां प्राप्नोमि ॥ २५-२६ ॥

ननु च कर्माण्येव क्रियमाणानि प्रलयकाले मोक्षं विदधते[1] । अन्यथा किमिति महाप्रलय उपजायते इत्याशङ्कायामारभते[2]–

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥

इच्छेति । इच्छाद्वेषक्रोधमोहादिभिस्तावन्मोहात्मक एव स परं स्फीतोभावमुपनीयते, येन प्रकृतिजठरान्तर्वर्ति समग्रमेव जगत् निजकार्यकरणमात्राक्षममेव प्रसुप्ततामवलम्बते; आमोहं वासनानुभवात्; प्रतिदिनं रात्रिसमये सौषुप्तवत् । न तु तावता विमुक्तरूपता; मोहानुभवसमाप्तौ पुनर्विचित्रव्यापार-संसारदर्शनात् ॥ २७ ॥

येषां त्वन्तं गतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥

जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

॥ इति श्रीमद्भगवद्गीतायां सप्तमोऽध्यायः ॥

---

1. S विदधति; B,N प्रविदधति
2. B -मारभ्यते; N -मिदमारभ्यते

येषामित्यादि युक्तचेतस इत्यन्तम् । ये तु विनष्टतामसाः पुण्यापुण्यपरिक्षयक्षेमीकृतात्मानः, ते विपाटितमहामोहवितानाः सर्वमेव भगवद्रश्मिखचितं जरामरणप्रयतमिस्रस्रुतं ब्रह्म विदन्ति; आध्यात्मिकाधिभौतिकाधिदैविकाधियाज्ञिकानि च ममैव रूपान्तराणि । प्रयाणकाले च, नित्यं भगवद् भावितान्तःकरणत्वात्, मां जानन्ति, यतो येषां जन्म पूर्वमेव भगवत्तत्त्वं, ते अन्तकाले परमेश्वरं संस्मरेयुः । 'किं जन्मासेवनया' इति ये मन्यन्ते, तेषां तूष्णींभाव एव शोभनः इति ॥ २८-३० ॥

॥ शिवम् ॥

अत्र संग्रहश्लोकः—

स्फुटं भगवतो भक्तिराहिता कल्पमञ्जरी ।
[1]साधनेछासमुचितां येनाशां परिपूरयेत् ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजनकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे सप्तमोऽध्यायः ॥

॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. २ (मू) ज्ञात्वेति । स्थितस्येति शेषः ।

श्लो. ४-५ (व्या) सैव जीवत्वं पुरुषत्वं प्राप्ता इति । अत्रेदं परिचिन्तनीयम् —सा इति तच्छब्दः प्रकाराष्टकभेदेव

1. This is the reading given in the Critical Ed. of the MB. But our CA read साधकेच्छा.

भिद्यमानां प्रकृतिं पूर्ववाक्यार्थमुख्यविशेष्यभूतां परामृशति इत्यत्र न कोऽपि सन्देहो भवितुमर्हति । तथा च आचार्यस्य ईदृशी सैव इत्यादिव्याख्यारीतिः इदं संसूचयतीव – अपरेयमिति पद्ये आचार्याभिमतः पाठः 'अपरेयमितोऽनन्याम्' इति, अथ वा तत्समानयोगक्षेमोऽन्यः इति; न तु 'अपरेयमितस्त्वन्याम्' इति सार्वत्रिकः रामकण्ठेनापि समादृतः पाठ आचार्याभिप्रेत इति ॥

श्लो.६-७ (व्या) **वासुदेवो भूतः सर्वस्य प्रभवः प्रलयश्चेत्यनेन** न केवलं 'कृत्स्नस्य जगत' इत्यादिमूलभागो व्याख्यातः, अपि तु वासुदेवशब्दार्थोऽपि। एवं च मूले अहंशब्दवाच्यो वासुदेवः परं ब्रह्मेति सिद्धमिति हृदयम् ॥

श्लो ८ (व्या) **यः शब्द इति** इति। अनेन प्रतीकधारणेन ज्ञायते 'प्रणवः सर्ववेदे यः शब्दः' इत्याचार्याभिमतः पाठ इव इति । सार्वत्रिकस्तु पाठः रामकण्ठीयश्च 'सर्ववेदेषु शब्दः' इत्येव ।

अथवेत्यादिद्वितीयव्याख्यानानुसारेण खे यः शब्दः सर्ववेदे च प्रणवः सोऽहमित्यर्थः । प्रकृष्टो नवः प्रणवः अत्यन्तं नूतनः । स च शब्दविशेषणम् । शब्दस्य सामान्यतः संयोगादिजन्यतया तदजन्यत्वमेव तस्यात्यन्तनूतनत्वम् । तदाह- संयोगविभागादिसामग्र्यन्तररहितः इति तथा अनाहताख्य इति च विशेषणद्वयेन । गगनगुणतया तथा ब्रह्मगुहागगनगामी इति च खे इति मूलस्य व्याख्या । सकलश्रुतिग्रामानुगामी इति सर्ववेदेषु इत्यस्य व्याख्या। श्रुतिग्रामानुगामिनः शब्दस्य संयोगाद्यजन्यत्वोक्त्या अनाहतत्वोक्त्या च, कण्ठताल्वभिघातजन्यत्वहेतुकवेदपक्षकपौरुषेयत्वानुमानं वस्तुतोऽनुमानाभास इति ध्वनिः ॥

श्लो. १०-११ (व्या) इत्याशयेनेति । इति मूलस्याशयं प्रदर्शयितुमित्यर्थः ॥

श्लो. १२-१३ (व्या) सत्त्वादीनीति । अपि वाभेदमाचार्यव्याख्यानं ज्ञापयति यत् मूले सात्त्विकादिशब्दाः स्वार्थिकप्रत्ययान्ता अभिमता आचार्येण इति ? अपि वा सत्त्वादीनां भगवन्मयत्वात् सात्त्विकादिभावानां भगवतः सकाशादुत्पत्तिरुच्यते इति दर्शनपरोऽयं ग्रन्थः । संवेदयते इति । णिजत्र स्वार्थे ।

'वासुदेवः सर्वम्' इति ज्ञानेनेति । अस्य च अग्रिमेण 'इति बुद्ध्या' इत्यनेन सामानाधिकरण्येनान्वयः । अथ वा 'ज्ञानेन' इति संपातायातम् । 'वासुदेवः सर्वम्' इत्यस्य 'प्रतिपद्यते' इत्यनेनान्वयः ।

वासुदेवः सर्वमित्यस्यार्थवर्णनपरः 'यो बहु ------स च दुर्लभः' इति ग्रन्थः । तत्र च योऽसावित्यन्वयः । बहुजन्मोपभोगेत्यादिना प्रतिपद्यते भगवत्तत्त्वमित्यन्तेन बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते इत्यस्य व्याख्यानम् ।

एवमित्यादि त्रिभिर्गुणमयैरितिपद्यव्याख्या । रविणा ज्योतिर्मयेन प्रकाशित इत्यत्र यथा ज्योतिष एव वस्तुतः प्रकाशकत्वमुक्तं भवति, तथैव गुणमयैर्भावैर्मोहितमित्यत्रापि मोहकत्वं गुणानामेवेति पर्यवस्यति इति कृत्वाऽऽह—गुणैर्मोहितमिदमिति ॥

श्लो. १४ (व्या) देवः क्रीडाकर इति । देवशब्दस्य दिवु क्रीडायामिति धातोर्निष्पन्नत्वादिति भावः ॥

श्लो. १६-१९ (व्या) अभिलष्यामीति । अभिपूर्वकात् भ्वादेर्लषः 'वा भ्राश ----- लषः' (*PA*, III, i, 70) इति वैकल्पिकः श्यन्; अभिलषामीत्यर्थः ॥

श्लो. २०-२३ (व्या) मूले 'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः' (श्लो. २०) इत्युक्त्वा 'श्रद्धयार्चितुमिच्छति' (२१) इत्युक्तम् । तथा च अत्र काममयी श्रद्धैव प्रकृता । 'तामेव' इत्यस्य (२१) 'यां यां तनुम्' इति पूर्वार्धे निर्दिष्टां तां तनुमित्यर्थः । विदधामि, विशेण अन्यव्यावृत्तविशेषवत्त्वेन दधामि धारयामि । तादृश्यास्तनोः भक्तनिष्ठपूर्वोक्तश्रद्धामयत्वात् श्रद्धाम् इत्यभेदोक्तिः । तथा च पूर्वार्धे श्रद्धयेति तृतीयार्थोऽभेदः, स च तन्वामन्वेति । एतत् सर्वं मनसि विधाय तात्पर्यार्थमाह व्याख्यायाम् - तत्समुचितामेव ममैवावान्तरतनुमिति ।

इन्द्रादिभावनातात्पर्येणेति । भावना, भावः । तथा च 'इन्द्रो भविष्यामि' इति तात्पर्येणेत्यर्थः । अथवा इन्द्रादिभवनतात्पर्येण इत्यर्थः । अथवा इन्द्रादिभवनतात्पर्येण इत्येव वा विवक्षितम् । इन्द्रादीनां यानि भवनानि वैजयन्तादीनि तत्प्राप्त्युद्देशेनेति तदर्थः॥

श्लो. २४ (व्या) परिहारेणेति । फले हेतौ तृतीया । परिहारार्थमित्यर्थः । अथ वा सहार्थयोगे तृतीया । परिहारपूर्वकमित्यर्थः । तस्य, साधकस्य, तत् आलम्बनम् । मुक्तभावेन इति पुनरपि फले हेतौ तृतीया; मुक्तभावाय मुक्तये इत्यर्थः । अथवा तृतीयार्थोऽभेदः । स च धात्वर्थे पर्यवसाने फलरूपेऽन्वेति । मुक्त्यात्मकफलं भवतीत्यर्थः ॥

श्लो. २७ (व्या) मोहानुभवसमाप्तौ इति । प्रलयकालीनेत्यादिः । अत्रैव च 'सर्गे' इति मूलं व्याख्यातम् । अथवा मोहानुभवासमाप्ताविति विवक्षितम् । एवं च द्वन्द्वमोहस्य सवासनस्यासमाप्तौ सत्यां, पुनः सर्गे इत्यर्थः ॥

श्लो. २८-३० (व्या) यतो येषामित्यादि । अत्रेदं विवक्षितमिव—'यतो येषाम् आजन्म जन्मनः प्रभृति पूर्वमेव प्रयाणात् पूर्वकालेऽपि भगवत्तत्त्वस्मरणं, ते अन्तकाले परमेश्वरं संस्मरेयुः' इति ।

किम् जन्मासेवनयेति । जन्मप्रभृति आसेवनया निरन्तरं सेवनया इत्यर्थः । यथाऽऽहुः—

'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः'

(*YS*, I, 14) इति ॥

संग्रहश्लोके-येनेति । यस्मात् कारणात् इत्यर्थः । यस्मात् कारणात् भक्तिः साधनेच्छासमुचितां मोक्षसाधनविषयकेच्छायाः अर्थात् तत्परिपूर्तेः अनुगुणाम् आशां परिपूरयेत्, तस्मात् कारणात् इयं कल्पमञ्जरी इत्यन्वयः ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां सप्तमोऽध्यायः ॥

# अष्टमोऽध्यायः

'ते ब्रह्म तद्विदुः' इत्यादिना यत् भगवता उपक्षिप्तं तत् प्रश्ननवकपूर्वकं[1] निर्णयति[2]—

अर्जुन उवाच—

किं तद् ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन् मधुसूदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥

किं तद् ब्रह्मेति । अधियज्ञ इति । अधियज्ञः कथम् ? [कश्च] 'कोऽत्र देहे' ? तिष्ठति इति शेषः ॥ १-२ ॥

श्रीभगवानुवाच—

अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥

अक्षरमिति । बृहत्त्वात् बृंहकत्वाच्च परं ब्रह्म । अत एव अध्यात्मशब्दवाच्यं, यतः स्वः अनिवृत्तिधर्मा[3] चैतन्याख्यो[4] भावः । तस्य च चैतन्यस्वभावस्य ब्रह्मणोऽपरिच्छिन्नबाह्यलक्षणतया क्रोडीकृतविश्वशक्तेः ऐश्वर्यलक्षणात् स्वातन्त्र्यात्

1. S पूर्वं
2. B निर्णाययति; N निर्वर्णयति
3. B,N निवृत्तिधर्मा; K अनिवृत्तधर्मा
4. B चैतन्यभावः

बहिर्भावावभासनात्मा[1] बहिर्भूतभावान्तरावभासनात्मा[2] च यो विसर्गः क्रमेण भूतानां ब्रह्मादिप्रमातॄणां भावानां जडानामुद्भवकारी जडाजडवैचित्र्यनिर्भासकः। तथा भूतभावस्य विगलितसकलवितथप्रपञ्चस्य सत्यत्वस्य उद्भवं करोतीति [स कर्मसंज्ञितः] ॥ ३ ॥

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वरः (!) ॥ ४ ॥

अधिभूतमिति। क्षरति स्रवति परिणामादिधर्मेण इति क्षरः[3] घटादिः पदार्थग्राम उच्यते। पुरुषः आत्मा। स च अधिदैवतम्, तत्र सर्वदैवतानां परिनिष्ठितत्त्वात्। अत एव अशेषयज्ञभोक्तृत्वेन यज्ञान् अवश्यकार्याणि कर्माणि अधिकृत्य यः स्थितः पुरुषोत्तमः सः अहमेव। अहमेव च देहे स्थित इति प्रश्नद्वयमेकेन यत्नेन निर्णीतम् ॥ ४ ॥

अथ योऽवशिष्टः प्रश्नः 'कथं प्रयाणकाले ज्ञेयोऽसि' इति तं निर्णयति—

अन्तकालेऽपि मामेव स्मरन् मुक्त्वा कलेबरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

---

1. B,N—भासनात्मः
2. S—भावान्तरभासनात्मा यो विसर्गः
3. S omits क्षरः

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मदर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयम् ॥ ७ ॥

अन्तकालेऽपि इत्यादि असंशयम् इत्यन्तम् । न केवलं स्वस्थावस्थायां यावत्, अन्तकालेऽपि[1] । मामेति - व्यवच्छिन्नसकलोपाधिकम् । कथं च अस्वस्थावस्थायां[2] विनिवृत्तसकलेन्द्रियचेष्टस्य भगवान् स्मृतिपथमुपेयात् इत्युपायमपि उपदिशति तस्मादिति । सर्वावस्थासु व्यावहारिकीष्वपि यस्य भगवत्तत्त्वं न हृदयादपयाति, तस्य भगवत्येव सकलकर्मसंन्यासिनः सततं भगवन्मयस्य अवश्यं स्वयमेव भगवत्तत्त्वं स्मृतिविषयतां यातीति । सदातद्भावभावितत्त्वं च अत्र हेतुः । अतः एवाह -- येनैव वस्तुना सदा भावितान्तःकरणः,[3] तदेव मरणसमये स्मर्यते तद्भाव एव च प्राप्यते इति । सर्वथा मत्परम एव मत्प्रेप्सुः स्यादित्यत्र तात्पर्यम् । न तु यदेवान्ते स्मर्यते तत्तत्त्वमेवावाप्यते[4] इति । एवं हि सति ज्ञानिनोऽपि यावच्छरीरभाविधातुदोषविकलितचित्तवृत्तेर्जडतां प्राप्तस्य तामसस्येव गतिः स्यात् । न च अभ्युपगमोऽत्र युक्तः, प्रमाणभूतश्रुतिविरोधात् । अस्ति हि—

तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥ इति
(*PS*, 83)

1. B,N कालेऽपीति
2. K (n) अन्तावस्थायाम्
3. B,N,K (n) अन्तःकरणभावः
4. N तत्तदेवावाप्यते

तस्मादेवं विध्यनुवादो। सदा येन भावितमन्तःकरणं तदेवान्ते प्रयाणानन्तरं प्राप्यते। तच्च स्मर्यते न वा इति नात्र निर्बन्धः। अन्वाचयश्चायम् अपिशब्देन सूचितः। स्मरणस्य असर्वथाभावं वाशब्दः स्फुटयति। 'सदा च मत्परमो जनः सर्वथा स्यात्' इति तात्पर्यं मुनिरेव प्रकटयति। यदाह - तस्मात् सर्वेषु कालेषु मामनुस्मर इति। तेनेत्थमत्र पदसङ्गतिः—सदा यं यं भावं स्मरन् कलेबरं त्यजति, अन्तेऽपि वा स्मरन्—वाग्रहणात् अस्मरन् वा – तं तमेवैति। यतोऽसौ सदा तद्भावेन भावितः।

अन्ये तु — कलेवरं त्यजति सति अन्ते कलेवरत्यागक्षणे बन्धुपुत्रादिप्रमात्रगोचरे[1] श्वासायासहिक्कागद्गदादिचेष्टाचरम-भाविनि क्षणे शरीरदाढर्यबन्धप्रतनूभावात् देहकृतसुखदुःखमोह-बन्धे[2] कालांशे देहत्यजनशब्दवाच्ये यदेव स्मरति तदेव प्रथमसं-विदनुगृहीतम् अस्य रूपं संपद्यते। [3]तादृशे च काले स्मरणस्य कारणं सदा तद्भावभावितत्वमिति। 'त्यजति' इति सप्तमी योज्या इति। प्राक्तन एवार्थः।

ननु एवमन्तकाले किं प्रयोजनं तत्स्मरणेन? क एवमाह 'प्रयोजनम्' इति? किंतु वस्तुवृत्तोपनतमेव तद्भवति तस्मिन्नन्त्ये क्षणे।

---

1. S,K(n)—प्रमात्रन्तरागोचरे
2. K—बन्ध्ये
3. S,B,N तादृशि

ननु पुत्रकलत्रबन्धुभृतेः शिशिरोदकपानादेर्वा अन्त्ये क्षणे दृष्टं स्मरणम् इति तद्भावापत्तिः स्यात्? मैवम् । न हि सोऽन्त्यः क्षणः, स्फुटदेहावस्थानात् । न हि असावन्त्यः क्षणः अस्मद्विवक्षितो भवादृशैर्लक्ष्यते । तत्र त्वन्त्ये क्षणे येनैव रूपेण भवितव्यं तत्संस्कारस्य दूरवर्त्तिनोऽपि—

[1]'जातिदेशकालव्यवहितानामपि आनन्तर्यम्, स्मृतिसंस्कारयोरेकरूपत्वात्' (*YS*, IV, 9.)

इति न्यायेन प्रबोधेन भाव्यम्। तद्वशात् तत्स्मरणं तत्स्मृत्या तद्भावप्राप्तिः। कस्य चित्तु देहस्य स्वस्थावस्थायामपि तदेव काकतालीयवशाद्व्यज्यते। यथा मृगादेः पुराणे वर्णनं तत्कृतं तु मृगत्वम् । अत एव 'प्रयाणकालेऽपि च माम्'(VII,30) इत्यादौ 'अपि च' इति ग्रहणम् । ये हि सदा भगवन्तं भावयन्ति 'एवंभूता भविष्यामः' इति, तेषाम्,

'तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी' (*YS*, I, 50)

इति न्यायेन तस्यामलक्ष्यायामन्तदशायां संस्कारान्तरापहस्तनेन तत्संस्कारकृते तत्त्वस्मरणे देहसद्भावक्षणकृते च तस्य स्मरणे,[2] अनन्तरं देहविनिपातक्षणे एव कालसंस्कारनिवृत्तेः तदिदमित्यादिवेद्यविभागानवभासात् संविन्मात्रसतत्त्वपरमेश्वरस्वभावतैव भवति[3] इत्यलम्[4] ।

---

1. S,B,N omit जाति also the following compound word स्मृति etc.

2. B omits देहसद्भाव - - - - स्मरणे

3. CA adds इति श्रीमदभिनवगुप्तगुरूणां संमतम् (B संस्मृतम्) after भवति.

4. B इत्यलं बहुना

असंशयमिति - नात्र संदेग्धव्यमिति [तात्पर्यम्] ॥ ५-७ ॥

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

अभ्यासेति। अनुचिन्तयन् इति - शरीरभेदानन्तरं विवृत्तकलेवरकृतव्यथः पश्चाद्भगवन्तं चिन्तयन्निति ॥ ८ ॥

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥

प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैवम् (?)।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्॥१०॥

कविमिति। प्रयाणेति। एवम् अनुस्मरेदिति। आदित्येति। आदित्यवर्णत्वं वासुदेवतत्त्वस्य [न] परिच्छेदकम्। आकृतिकल्पनादि[1]विभ्रान्तिमयमोहतमसः अतीतत्त्वात् रवित्वेनोपमानमित्याशयः। भ्रुवोर्मध्ये इति प्राग्वत् ॥ ९-१० ॥

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेणाभिधास्ये ॥ ११ ॥

यदक्षरमिति। सम्यक् गृह्यते निश्चीयते अनेनेति संग्रहः उपायः। तेन उपायेन तत्[2] पदमभिधास्ये, उपायमत्र सतताभ्यासाय वक्ष्ये ॥ ११ ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥

---

1. N विकल्पनादि
2. S उपायेनैतत्

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन्देहं मद्भावं याति स ध्रुवम् (?) । १३ ॥

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥

सर्वद्वाराणीत्यादि योगिन इत्यन्तम् । द्वाराणि इन्द्रियाणि । हृदि इति--अनेन विषयसंगाभाव उच्यते, न तु विष्ठास्थानाधिष्ठानम् । आत्मनः प्राणम् आत्मसारथिम् इच्छाशक्त्यात्मनि मूर्ध्नि सकलतत्त्वातीते धारयन् इति कायनियमः । ओमिति जपन् इति वाङ्नियमः । मामनुस्मरन्निति चेतसोऽनन्यगामिता[1] । यः प्रयाति–दिनाद्दिनम्[2] अपुनरावृत्तये गच्छति । तथा च देहं त्यजन् 'कथं मे[3] पुनरिदं सकलापत्स्थानं शरीरं मा भूयात्' इत्येवं यो मामनन्यचेताः स्मरति सततमेव, याति, जानाति[4], स मद्भावम् मत्स्वरूपम् । न[5] त्वत्र मुनेः परब्रह्माद्वैतपदोपक्षेपविरोधी उत्क्रान्तौ[6] भरः । तथाचोक्तम्—

व्यापिन्यां शिवसत्तायाम् उत्क्रान्तिर्नाम निष्फला ।
अव्यापिनि शिवे नाम नोत्क्रान्तिः शिवदायिनी ॥ इति

---

1. S चेतसाऽनन्यगामिता
2. N दिनंदिनं
3. S,B,N omit मे
4. S omits जानाति
5. N नन्वत्र
6. B तत् क्रान्तौ; K (n) विरोधीति उत्क्रान्तौ भरः

यदि वा सतताभ्यासोऽपि यैर्न कृतः, तथापि कुतश्चित् [1]स्वतन्त्रेश्वरेच्छादेर्निमित्तादन्त्ये एव क्षणे यदा तादृग्भावो जायते, तदा अयमुत्क्रान्तिलक्षण उपायः संस्कारान्तरप्रतिबन्धक उक्तः। अत एव 'यदक्षरं वेदविदो वदन्ति' इत्यादिना 'अभिधास्ये' इत्यन्तेन प्रतिज्ञा कृता क्षणमात्रस्यापि भगवदनुचिन्तनस्य[2] सकलसंस्कारविध्वंसनलक्षणाम् अद्भुतवृत्तिं प्रतिपादयितुम्। [3]यदाहुराचार्यवर्याः—

निमेषमपि यद्येकं क्षीणदोषे करिष्यसि।
पदं चित्ते तदा शंभो किं न संपादयिष्यसि॥
(स्तवचिन्तामणिः, श्लो ११४) इति।

अत एव 'प्रयाणकाले स्मरणेन विना खण्डना [दृष्टा]' इति येषां शङ्का तान् वीतशङ्कान् कर्तुमुक्तम् 'अनन्यचेताः सततम्' इति अन्यत्र फलादौ साध्ये यस्य न चेत इत्यर्थः। तस्याहं सुलभ इति। तस्य[4] न किंचित् प्रयाणकालौचित्यपर्येषणम्, तीर्थसेवा, उत्तरायणम्, आयतनसंश्रयः,[5] सत्त्वविशुद्धिः,[6] सचिन्तकत्वम्,[7] विषुवदादिपुण्यकालः, दिनम्, अकृत्रिमपवित्रभूपरिग्रहः, स्नेहमलविहीनदेहता, शुद्धवस्त्रादिपरिग्रहः[8] इत्यादिक्लेशोऽभ्यर्थ-

1. S omits स्वतन्त्र—
2. S,B चिन्तनमयस्य
3. S omits यदाहु - - - इति
4. S,B omit तस्य
5. N आवर्तनसंश्रयः
6. S,K –विवृद्धिः
7. N सचित्तकत्वम्
8. S,B,N omit परि-

नीय इत्यर्थः; यत्प्रागुक्तम् – 'तीर्थे श्वपचगृहे वा' इत्यादि ॥ १२-१४ ॥

ननु 'मद्भावं याति' इत्युक्तम् । तत्किं[1] प्राप्तेऽपि पुनरावृत्तिरस्ति इत्याशंक्याह—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥

मामुपेत्येति । अन्यतस्तु सर्वत एव पुनरावृत्तिरस्ति इति[2] समनन्तरश्लोकेन प्रतिपादयिष्यते । मां तु प्राप्य न पुनर्योगिनः जन्मादिवासमाप्नुवन्ति[3] ॥ १५ ॥

आ ब्रह्म भुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥

आ ब्रह्मेति । ब्रह्मलोकप्राप्तानामपि[4] पुनरावृत्तिरस्ति इति सर्वैर्व्याख्यातम् । एतदभ्युपगमे च 'तदुपरितनलोकगतिर्मुक्तिः' इत्यभिहितं स्यात् । तच्च न हृदयङ्गममिति संशयमहामोहकलुषीकृतान्तर्दृशामस्माकं प्रतिभाति । इयमागमाधिगता व्याख्यावर्तिः[5]— आब्रह्म यावत् ब्रह्मपदं प्राप्तं तावत् यस्मात् कस्माच्चित् तिर्यगूर्ध्वादधस्ताद् भुवनात् पुनरावर्तन्ते, चक्रवत् स्थानान्तरमविरतं भ्राम्यन्तो विपरिवर्तन्ते इति ॥ १६ ॥

---

1. S,B,N तत्र किम्
2. B omits अन्यतस्तु - - - इति
3. B,N प्राप्नुवन्ति; B,N,K(n) add न स पुनरावर्तते इति श्रुतेः । यं प्राप्य न निवर्तन्ते इत्यग्रेऽपि ।
4. S—काप्तानामपि
5. S व्याख्यावृत्तिः

ननु क एवं जानाति यत् सर्वभुवनेभ्यः पुनरावृत्तिः। ब्रह्मादय एव हि तावत् चिरतरस्थायिनः श्रूयन्ते। ते एव[1] कथं पुनरावर्त्तिनः? पुनरावर्त्तित्वे हि तेऽपि स्युः प्रभवाप्ययधर्माणः इत्याशङ्कया]ह—

सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः॥ १७॥
अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके॥ १८॥
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते।
रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे॥ १९॥

सहस्रेत्यादि आगम इत्यन्तम्। ये खलु [2]दीर्घदृश्वानः, ते ब्रह्मणोऽपि रात्रिं दिवं [च]पश्यन्ति प्रलयोदयतया। तथा च अहरहस्त एव विबुध्य निजां निजामेव चेष्टामनुरुध्यन्ते[3] प्रतिरात्रि च तेषामेव निवृत्तपरिस्पन्दानां[4] शक्तिमात्रत्वेनावस्थानम्[5]। एवं सृष्टौ प्रलये च पुनः पुनर्भावः[6]। नान्येऽन्ये उपसृज्यन्ते, अपि तु त एव जीवाः। कालकृतस्तु चिरक्षिप्रप्रत्ययात्मा विशेषः। एष च परिच्छेदः प्रजापतीनामप्यस्ति। ततश्च तेऽपि प्रभवाप्ययधर्माण एवेति स्थितम्॥ १७-१९॥

1. S,B,N अत एव तावत्
2. N अदीर्घ-
3. B—मवरुध्यन्ते
4. S – परिस्पन्दिनाम्
5. N —त्वेनोपस्थानम्
6. K (n) —र्भवः

सर्वतो लोकेभ्यः पुनरावृत्तिः, न तु मां परमेश्वरं[1] प्राप्य इति स्फुटयति—

परस्तस्मात्तु भावोऽन्यो व्यक्ताव्यक्तः सनातनः ।
यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥

अव्यक्तोऽक्षर इत्याहुस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ २१ ॥

पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यं प्राप्य न पुनर्जन्म लभन्ते योगिनोऽर्जुन ॥
यस्यान्तःस्थानि भूतानि यत्र सर्वं प्रतिष्ठितम् ॥ २२ ॥

पर इत्यादि प्रतिष्ठितमित्यन्तम् । उक्तप्रकारं काल-संकलनाविवर्जितं तु वासुदेवतत्त्वम् । व्यक्तम्, सर्वानुगतम्; तत्त्वेऽपि अव्यक्तम्, दुष्प्रापत्वात् । तच्च भक्तिलभ्यमित्यावेदितं प्राक् । तत्रस्थं च एतद्विश्वं यत्खलु अविनाशिरूपं[2] सदा तथा-भूतम् । तत्र कः पुनःशब्दस्य आवृत्तिशब्दस्य चार्थः? स हि मध्ये तत्स्वभावविच्छेदापेक्षः । न च सदातनविश्वोत्तीर्णविश्वाव्यति-रिक्त - विश्वप्रतिष्ठात्मक[3]परबोधस्वातन्त्र्यस्वभावस्य श्रीपर-मेश्वरस्य तद्भावप्राप्तिः[4] [संभवति], येन स्वभावविच्छेदः कोऽपि कदाप्यस्ति [इति कल्प्येत] । अतो युक्तमुक्तम् 'मामु-पेत्य तु' (VIII, 16) इति ॥ २०-२२ ॥

1. S,K omit परमेश्वरम्
2. B स्वरूपम्
3. S,B,N,K (n) विश्वनिष्ठात्मक —
4. N —प्राप्तस्य

एवं च सतताभ्यासेन येषां क्लेशं विनैव भगवदाप्तिः तेषां वृत्तमुक्तम् । इदानीम्[1] उत्क्रान्त्या येऽपवर्गं भोगं चेच्छन्ति, तेषां कश्चिद्विशेष उच्यते—

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥

यत्रेति । अनावृत्तिः मोक्षः । आवृत्तिः भोगाय ॥ २३ ॥

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥

अग्निरिति । धूमेति । उत्तरेण, ऊर्ध्वेन; अयनं षाण्मासिकम् । तच्च प्रकाशादिधर्मकत्वात् दहनादिकैः शब्दैरुपचर्यते । अतो विपरीतं विपर्ययेण । तत्र चन्द्रमसो भोग्यांशानुप्रवेशात् भोगायावृत्तिः ॥ २४-२५ ॥

शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
अनयोर्यात्यनावृत्तिमाद्ययाऽऽवर्ततेऽन्यया ॥ २६ ॥

शुक्लकृष्णे इति । अनयोर्गत्योर्मध्यादाद्यया अनावृत्तिः मोक्षः, अन्यया भोगः ॥ २६ ॥

नैते सृती पार्थ जानन् योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥

---

1. B,N,K (n) इदानीं पुनः

नैते इति । एते सृती यो वेत्ति आभ्यन्तरेण क्रमेण योगाभ्यासस्वीकृतेनेत्यर्थः । एतच्च वितत्य प्रकाशयमानं ग्रन्थं विस्तारयतीत्यलम् । तस्मादिति - सर्वे ये काला आभ्यन्तराः[1] तद्विषयं योगमभ्यस्येः[2] ।

अस्मद्गुरवस्तु आहुः - सर्वानुग्राहकतया मध्ये [3]आभ्यन्तरकालकृतमुत्क्रान्तिभेदमभिधाय प्रकृतमेव बाह्यकालविषयं[4] मुख्यं[5] प्रमेयमुपसंहृतम् 'तस्मात्सर्वेषु कालेषु' इत्यादिना ॥ २७ ॥

वेदेषु यज्ञेषु तपस्सु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥

॥ इति श्रीमद्भगवद्गीतायां अष्टमोऽध्यायः ॥

वेदेष्विति । अत्येति, अभिभवति, सर्वकर्मसंस्काराणां भगवत्स्मृत्या विफलीकरणात् । सर्वकर्मपरिक्षये च असौ सुखेनैव विन्दति परं शिवमिति॥ २८ ॥

॥ शिवम् ॥

अत्र संग्रहश्लोकः—

[6]सर्वतत्त्वगतत्वेन विज्ञाते परमेश्वरे ।
अन्तर्बहिर्न साऽवस्था न यस्यां भासते विभुः ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहेऽष्टमोऽध्यायः ॥

1. N अभ्यन्तराः
2. K अभ्यसेत्
3. S omits आभ्यन्तर-
4. S omits बाह्यकालविषयं
5. N मुख्यप्रमेयं
6. S,B सर्वसर्व(त्व)गत—

## ॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. ३ (व्या) बृहत्त्वात् इति । महत्त्वात् इत्यर्थः । 'बृहद्विशालं पृथुलं महत्' इत्यमरः (III, i, 60) । बृंहकत्वात् इति । वर्धकत्वात् इत्यर्थः । अर्थद्वयेऽपि ब्रह्मशब्दः बृहिवृद्धौ इति धातोर्निष्पन्नो बोध्यः ।

स्वः इत्यादि । तथा च स्वभावशब्दस्य स्वात्मको भावः इत्यर्थः, न तु स्वस्य भावः इति । अत एव शिवसूत्रम्—

'चैतन्यमात्मा' (I, 1) इति ।

तथा प्रत्यभिज्ञाकारिकाऽपि—

'आत्माऽत एव चैतन्यम्' (I, v, 12) इति ।

यो विसर्ग इति । अस्य च उत्तरत्राध्याहार्येण 'स कर्मसंज्ञितः' इत्यनेन संबन्धः । स्वभावस्यैव भूतभावोद्भवकरत्वे हेतुत्वं दर्शयति - तस्य चेत्यादिना ।

भूतभावोद्भवकर इति मूले भूतशब्दः पृथिव्यादिभूतवाचकः; भावशब्दश्च भावयति, जनयति, चित्ते धारयति ज्ञानविषयीकरोति वा इत्यर्थयोगात् प्रमातृपरः; एवं भूतानां भावानां च उद्भवं करोति इति विग्रहार्थमाश्रित्य व्याख्यानमाह— बहिर्भावेत्यादिना निर्भासक इत्यन्तेन । अत्र चेदं विवक्षितमिव — 'बहिर्भूतावभासनात्मा बहिर्भूतभावान्तरावभासनात्मा च यो विसर्गः, क्रमेण भूतानां जडानां, भावानां ब्रह्मादिप्रमातॄणां च उद्भवकारी जडाजडवैचित्र्यनिर्भासकः' इति; भूतभावोद्भवकरमूलानुरोधात्; क्रमेणेत्याचार्यवचनस्वार-

स्यात्; पूर्वं सप्तमाध्यायेऽपि 'भूमिराप' इत्यादिना (श्लो. ४) प्रथमतः पृथिव्यादिभूतप्रकृतित्वं भगवत उक्त्वा, तदनन्तरमेव 'अपरेयम् - - - जीवभूताम्' इति (श्लो. ५) जीवप्रकृतित्वस्योपवर्णितत्वात्; भूतशब्दस्य सामान्यतो जडवाचकत्वप्रसिद्धेः, ब्रह्मादिप्रमातृत्ववाचकत्वाप्रसिद्धेश्च; भावशब्दस्य तु पूर्वोपदर्शितव्युत्पत्त्या प्रमातृवाचकत्वसंभवाच्च ।

बहिर्भूतावभासनात्मा इत्यत्र बहिरिति अवभासनक्रियाविशेषणम्; अन्तर्विद्यमानस्य बहिराभासनमेव सृष्टिरिति आभासवादिनां प्रत्यभिज्ञाशास्त्रकाराणां समयात् । बहिर्भूतभावान्तरावभासनात्मा इत्यत्रापि बहिरिति अवभासनविशेषणमेव । अत्र भूतेत्यधिकं प्रविष्टम् । अथवा भावशब्दो भूतभावे भूतानि भावयति इत्येतस्मिन्नर्थे वर्तते इति प्रदर्शयितुमुक्तो वेदितव्यः । स्वात्मनोऽपि संविद्रूपतया भूतभावकत्वात् तद्विवेकप्रदर्शनाय भावान्तरेति ।

अथवा - भावयति इति भावः । चैतन्यमित्यर्थः । बहिः भावस्य यत् अवभासनं तदात्मा अर्थात् प्रमातृरूपः । बहिर्भूता ये भावान्तराः, अर्थात् प्रमातृतो भिन्ना ये बाह्या विषयाः जडत्वेन लोकप्रसिद्धाः, तत्त्वेन अवभासनात्मा अर्थात् जडरूपः इति अर्थो वर्णनीयः । सर्वं खल्विदं चेतनं ब्रह्म; लौकिको जडाजडविभागस्तु चेतनस्य अविभावनविभावनाभ्यां संभवति इति हि आचार्योपदर्शितः परमाद्वैतराजमार्गः ।

इदानीं भूतभावोद्भवकर इत्यस्यैव मूलस्य भूतस्य यो भावः तस्योद्भवकर इति विग्रहमङ्गीकृत्यापि अर्थं वर्णयितुमाह-तथेति । अस्मिंश्च पक्षे भूतशब्दः सत्यापरपर्याययथाभूतार्थकः ।

तस्य भावः सत्यत्वमेव । 'भूतं क्ष्मादौ......सत्ये देवयोन्यन्तरेऽपि ना' इति, 'भावः सत्तास्वभाव..,..जन्मसु' इति च मेदिनीकोशात् । उक्तार्थमेव दर्शयति—तथा विगलितेत्यादिना । विगलितः सकलवितथप्रपञ्चः यस्मात् तस्येति विग्रहः । अनेन सत्यत्वं पारमार्थिकं कीदृशमिति दर्शितम् । सत्यत्वस्येति भूतभावशब्दार्थं वक्ति ।

यद्वा पूर्वं भूताः अर्थात् पश्चात् मोक्षदशायां विगलिता ये भावाः वितथप्रपञ्चात्मका यस्मात् तस्मात् सत्यस्वरूपात् तत् इति बहुव्रीह्यर्थमेव दर्शयति - विगलितेत्यादिना। उक्तबहुव्रीह्याक्षिप्तमन्यपदार्थं विशेष्यं दर्शयति—सत्यत्वस्येति। उद्भवं करोति इति - यः, स कर्मसंज्ञित इति सम्बन्धः ॥

श्लो. ४ (व्या) पुरुषोत्तम इति । इदं च देहभृतां वरः इति मूलपाठमाश्रित्योक्तमिव ॥

श्लो. ५-७ (व्या) प्रमाणभूतश्रुतिविरोधादिति । ज्ञानिनोऽपि देहत्यजनकालिकधातुदोषेण हेतुना तामसस्येव गतिकल्पने सति

ब्रह्म वेद ब्रह्मैव भवति (*Mu. U.* III, ii, 9)

तद्धैतत्पश्यन् वामदेवः प्रतिपेदे

अहं मनुरभवं सूर्यश्च (*Br, U.* I, iv, 10)

तस्य तावदेव चिरं यावन्नविमोक्ष्येऽथ संपत्स्ये (*Ch.U.*VI xiv, 2)

इत्यादिप्रमाणभूतश्रुतिवाक्यैर्विरोधादित्यर्थः । अस्ति हि इति उक्तार्थे श्रुत्यनुसारी श्लोक इति शेषः ।

तीर्थे श्वपचगृहे इत्यादि । आहुश्च—

जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ।

- - - - - - - - - - - - - - -

कुल्यायामथवा नद्यां शिवक्षेत्रेऽपि चत्वरे ।
पर्णं पतति चेत्तेन तरोः किं नु शुभशुभम् ॥
(विवेकचूडामणिः, 555, 560)

देहकृतसुखदुःखमोहबन्धे इति । तनूकृतसुखदुःखमोहबन्धे इति विवक्षितमिव ।

सप्तमी योज्येति । त्यजतीति त्यजधातोः शत्रन्तात् सति-सप्तम्या अर्थः वाक्यार्थे संयोज्य इत्यर्थः ।

यथा मृगादेरित्यादि । यथा पुराणे वर्णितं मृगादेः स्मरणं जडभरतादीनां, तत्कृतं तु तेषां समनन्तरजन्मनि मृगत्वम् इत्यर्थः ।

तेषां तज्जः इत्यादि देहविनिपातक्षणे इत्यन्तम् । अत्र पदानि विमिश्रितानीव । अथवा प्रायश एवं विवक्षितमिव—'तेषां देहसद्भावक्षणकृते च तस्य स्मरणे, अनन्तरं "तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" इति न्यायेन - - - तत्तत्त्वस्मरणे अनन्तरं देहविनिपातक्षणे' इति ॥

श्लो. १२-१४ (व्या) विष्ठास्थानाधिष्ठानमिति । प्रतिष्ठास्थानात्मकमधिष्ठानमिति यावत् । हृदयशब्दस्य प्रतिष्ठास्थानवाचकत्वमुपदर्शितमाचार्येणैव ईश्वरप्रत्यभिज्ञाविमर्शिन्यां 'हृदयं नाम प्रतिष्ठानम्' (*I PV*, *I*, v, 14) तथा 'हृदयस्था' इति पराविंशिकाद्वितीयपद्यव्याख्याने च 'हृदयस्था' इति पद

'प्रतिष्ठास्थानं संविदात्म हृत्, तत्स्था' इति व्याचख्यौ आचार्यः। एवं च प्रकृते जीवस्य प्रतिष्ठास्थानात्मकमधिष्ठानमिति पर्यवसितम्। हृदीति सप्तम्यर्थः अधिष्ठानम्।

अथवा निष्ठास्थानाधिष्ठानम् इति विवक्षितम् प्रकृते। निष्ठात्मकं नियतं, निष्ठायाः मनःसमाधेर्वा, यत् स्थानं तदेव अधिष्ठानमित्यर्थः।

इदमत्रावधेयम्— भगवद्गीताव्याख्याता आनन्दवर्धनः प्रकृतगीताश्लोकव्याख्याने प्रकृतविवादविषयाणि अभिनवगुप्ताचार्यवाक्यानि 'इन्द्रियाणि' इत्यारभ्य 'नोत्क्रान्तिः शिवदायिनी इत्यन्तम् एवमनुवदति :—

> श्रीमदभिनवगुप्तपादा रहस्यार्थान्तरमाहुः— "सर्वद्वाराणि चक्षुरादीनि संयम्य, रूपादिविषयेभ्यो व्यावर्त्य —न तु द्वाराणि विष्ठास्थानादीनि—मनः प्राणसारथिं चित्तम्, इच्छाशक्त्यात्मनि मूर्ध्नि सकलतत्त्वातीते धारयन्" इत्यादि।

अत्रापि पङ्क्तयस्त्रुटिता इव। तद्ग्रन्थस्थपङ्क्तीनां गीतार्थसंङ्ग्रहमातृकागतप्रकृतपङ्क्तीनां च परिशोधने इदमत्र प्रकृते गीतार्थसंग्रहे विवक्षितमिति प्रतिभाति—

> सर्वद्वाराणि चक्षुरादीनि इन्द्रियाणि, न तु विष्ठास्थानादीनि। हृदि इत्यनेन मनसः विषयसंगमाभावः न तु अधिष्ठानम्, नित्यतं स्थानम् उच्यते। आत्मनः (मनसः शरीरस्य वा) प्राणं, सारथिम् इच्छाशक्त्यात्मनि'

इत्यादि। अत्र च विष्ठास्थानं पायुः।

यदि विद्यमानपाठस्य साधुत्वं परिरक्षणीयम्, तदा 'सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च' इति श्लोकपूर्वार्धस्य समग्रस्य तात्पर्यम् अनेन विषयसंगमाभाव उच्यते, न तु विष्ठास्थानाधिष्ठानम् इति वाक्येन दर्शयत्याचार्य इत्यादिरीत्याभ्युपगन्तव्यम् । एवं च अनेन सर्वद्वाराणि संयम्य इत्युक्त्वा तदनन्तरमेव मनो हृदि निरुद्ध्य इत्युपदेशेन विषयेषु मनसः संगमस्य आसक्तेः अभाव उच्यते भगवता, न तु विष्ठास्थानस्य पायोः सर्वशरीरद्वाराणामिन्द्रियाणाम् उपलक्षणभूतस्य अधिष्ठानम्, अधिष्ठीयते अनेनेति व्युत्पत्त्या अधिष्ठानं व्यापारनिरोधः प्रकृते विवक्षित इति तात्पर्यमिव भाति ।

याति जानाति इति । या प्रापणे इति धातुपाठात्, प्रापणस्य गतिपर्यायत्वात्, गत्यर्थानां च धातूनां ज्ञानार्थकत्वाच्चेति भावः । एवंरीत्या अर्थवर्णनस्य औचित्यं प्रदर्शयति – नत्वित्यादिना । अत्र 'याति जानाति स मद्भावम्' इति व्याख्यारीतिरियम् आचार्यस्यैवं संसूचयतीव प्रकृते–गीतापद्ये ओमित्येकाक्षरमित्यादौ तुरीयपादमाचार्यः प्रायशो 'मद्भावं याति स ध्रुवम्'—अथवा तत्समानमन्यत्—इति पपाठेति । यद्यपि सार्वत्रिकः पाठः 'स याति परमां गतिम्' इत्येव । तथापि 'यः प्रयाति, स मद्भावं याति नास्त्यत्र संशयः' इति पाठोऽपि विद्यते इति संदर्शयति बेलवेलकरः । अथवा परमा गतिः वस्तुत ईश्वरभावावाप्तिरेव । तथा च परमां गतिमित्यस्यैवार्थो वर्ण्यते आचार्येण याति इत्यादिनेत्यपि वक्तुं शक्यम् ।

निमेषमपि इति । प्राणप्रयाणनिमेषमात्रमपीत्यर्थः ।

तस्य न किंचित् प्रयाणकालौचित्यपर्येषणमित्यादि । आहुश्च–

सदात्मनि ब्रह्मणि तिष्ठतो मुनेः
पूर्णाद्वयानन्दमयात्मना सदा ।
न देशकालाद्युचितप्रतीक्षा
त्वङ्मांसविट्पिण्डविसर्जनाय ॥
(विवेकचूडामणिः, ५५८)

श्लो. १६ (मू) मामुपेत्येति । स्थितस्येति शेषः ॥

श्लो. २३ (अ) अपवर्गं भोगं चेति । प्राप्तुमिति शेषः । प्राप्तौ च उत्क्रान्त्येति तृतीयार्थप्रयोज्यत्वस्यान्वयः ।

इच्छन्तीति । यद्यपि 'यान्ति' इत्येव मूलम्; तथाऽपि धातेः गत्यर्थकत्वात्, गतेरिच्छाजन्यत्वात् जनकेच्छायाम् धातोर्लक्षणा इत्यभिप्रेत्यावतारितमाचार्येण इति भाति । अथ वा गच्छन्ति इत्येव वा विवक्षितम् ॥

श्लो. २४-२५ (व्या) दहनादिकैः शब्दैरिति । दहनादिवाचकैः अग्न्यादिभिः शब्दैरिति यावत् ॥

श्लो. २८ (व्या) अत्ययनस्य अभिभवरूपत्वात् आह अत्येति अभिभवति इति । अभ्येति इति मूलपाठे तु अभि अभिक्रम्य विरोधभावेन एति गच्छति इति तत्पर्येण व्याचष्टे– अभिभवति इति ॥

सङ्ग्रहश्लोके विभुरिति–विशेषेण विविधं च भवति यः ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्याम् अष्टमोऽध्यायः ॥

# नवमोऽध्यायः

श्रीभगवानुवाच—

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥

इदमिति । अनसूयत्वं ज्ञानसंक्रान्तौ कारणं मुख्यम् । ज्ञानविज्ञाने प्राग्वत् ॥ १ ॥

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥

राजेति । राजते सर्वविद्यामध्ये दीप्यते या । इहैव ह्युच्यते – 'अध्यात्मविद्या विद्यानाम्' इति । राज्ञां जनकादीनाम् अत्र अधिकारः, तेषां रहस्यम् अतिगुप्तत्वात्[1] । क्षत्रियसुलभेन वी(धी)रभावेनाविकम्पनात्[2] कर्तुमनुष्ठातुं[3] सुसुखम् । [अव्ययम्], न चास्य ब्रह्मोपासनात्मनः कर्मणः अन्यकर्मवदुपभोगादिना व्ययोऽस्ति ॥ २ ॥

अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥

अश्रद्दधाना इति । [4]निवर्तन्ते, पुनः पुनर्जायन्ते म्रियन्ते च ॥ ३ ॥

---

1. S,B,N प्रति गुप्तत्वात्
2. S,B,N -कम्पत्वात्
3. N अनुष्ठानम्
4. B adds न च मत्स्था यथाकाशमे(ए)वं हि सर्वभूतानि - before निवर्तन्ते । Obviously this is to go the next verse.

मया ततमिदं कृत्स्नं जगदव्यक्तमूर्त्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥

मयेति । मत्स्थानि सर्वभूतानीति । सुचिरमपि गत्वा अन्यस्य प्रतिष्ठाधाम्नः अविद्यमानत्वात् । भूतरूपबोध्यात्मकप्रसिद्धतदीयजडरूपपुरःसरीकारेण तदवभासे [1]तद्विपरीतबोधस्वभावतिरोधानम् इत्येतदाह—'न चाहं तेष्ववस्थितः' इति ॥४॥

न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥

न चेति । न च मत्स्थानि - अविद्यान्धानां तत्त्वादृष्टेः । न हि मूढा अविच्छिन्नसंवित्स्वभावं परमेश्वरं समस्तवस्तुपरिच्छेदप्रतिष्ठास्थानं मन्यन्ते । अपि तु 'कृशो देवदत्तोऽहम् इदं वेद्मि भूतले[2] इदं स्थितम्' इति मितमेवस्वभावं [3]प्रतिष्ठास्थानतया पश्यन्ति ।

ननु कथमेतद्विरुद्धम् [उच्यते]? इत्या[शङ्क्या]ह 'पश्य योगमैश्वरम्' इति । योगः शक्तिः, युज्यमानत्वात् । एतदेव ममैश्वर्यम्, यदेवं निरतिशयाद्भुतवृत्ति स्वातन्त्र्यमित्यर्थः ॥ ५ ॥

यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥

---

1. N तत्तद्विपरीत—
2. S omits भूतले
3. N प्रतिष्ठानस्थानतया

एवं हि सर्वभावेषु चराम्यनभिलक्षितः ।
भूतप्रकृतिमास्थाय सहैव च विनैव च ॥ ७ ॥

यथेति । एवमिति । यद्वदाकाशवाय्वोरविनाभाविन्यपि संबन्धे न जातु[1] नभःस्पृश्यता श्रूयते, एवं सकलसंसारविसार्यपि भगवत्तत्त्वं न सर्वजनविषयम् ॥ ६-७ ॥

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ८ ॥

सर्वेति । प्रकृतिं, अव्यक्तरूपाम् ॥ ८ ॥

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ९ ॥

प्रकृतिमिति । 'स्वां प्रकृतिमवष्टभ्य' इत्येतावता जडोऽपि स्वतोऽयं भाव(भूत)ग्रामः परप्रकृत्यन्वयात् प्रकाशतां प्राप्तः [इति प्रतिपादितम्] ॥ ९ ॥

न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ १० ॥

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥ ११ ॥

न चेति । मयेति । न च मेऽस्ति कर्मबन्धः, औदासीन्येन वर्तमानोऽहं यतः । अत एवाहं जगन्निर्माणे अनाश्रितव्यापारत्वात् हेतुः ॥ १०-११ ॥

1. S जातुचित्

अवजानन्ति मां मूढा मानुषीं तनुमास्थितम् ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ १२ ॥

अवजानन्तीति । सोऽहं [1]सर्वजनान्तःशायी, सर्वस्यात्मरूपतया[2] अवज्ञास्पदम्; यत् मानुषादिचतुर्दशविध[3]सर्गव्यतिरिक्त ईश्वरो नोपलभ्यते, स कथमस्ति इति ॥ १२ ॥

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
आसुरीं राक्षसीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १३ ॥

मोघेति । तेषां च कर्म ज्ञानम् आकांक्षाश्च सर्वं निष्फलम्, अवस्तुविषयत्वात् । आसुरीं राक्षसीं चेति– उद्रिक्तरजस्तमोधर्माण इति ॥ १३ ॥

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १४ ॥
सततं कीर्तयन्तश्च यतन्तश्च यतव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १५ ॥
ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १६ ॥

महात्मान इत्यादि विश्वतोमुखमित्यन्तम् । दैवीं, सात्त्विकीम् । यजन्तः, बाह्यद्रव्यादियागैः । अन्ये तु मां ज्ञानयज्ञेनैवोपासते । अतः केचित् एकतया ज्ञानतः, केचित् बहुधा, कर्मयोगात् । मत्परा एव सर्वे ॥ १४-१६ ॥

---

1. S omits सर्व— ; B,N omit—जन—
2. S,K—स्वपरूरू—
3. B omits—विध -

ननु कर्म तावत् कारककलापव्याप्तभेदोद्रेकि कथमभिन्नं भगवत्पदं प्रापयतीति ? उच्यते—

अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १७ ॥
पिताहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥ १८ ॥
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १९ ॥
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ २० ॥

अहं क्रतुरिति अर्जुनेत्यनन्तम् । एकस्यैव निर्भागस्य ब्रह्मतत्त्वस्य परिकल्पित[भेदवत्]साधनाधीनं कर्म पुनरेकत्वं निर्वर्तयति; क्रियायाः सर्वकारकात्मसाक्षात्कारेणावस्थाने भगवत्पदप्राप्ति प्रत्यविदूरत्वात् । उक्तं च—

सेयं क्रियात्मिका शक्तिः शिवस्य पशुवर्तिनी ।
बन्धयित्री स्वमार्गस्था ज्ञाता सिद्ध्युपपादिका ॥
(*Spk*, III, 16)

इति मयाप्युक्तम्—

उपक्रमे यैव बुद्धिर्भावाभावानुयायिनी ।
उपसंहृतिकाले सा भावाभावानुयायिनी ॥ इति ।

तत्र तत्र वितत्य विचारितचरमेतत् [1]इतीहोपरम्यते । तपाम्यहमित्यादि अद्वैतकथाप्रसङ्गेनोक्तम् ॥ १७-२० ॥

1. S omits इति

नन्वेवं यदि बाह्ययागादिनाऽपि ब्रह्मप्राप्तिः[1], तर्हि अग्निष्टोमादिष्वपि किम् अन्यो याज्यः? अभ्युपगमे भेदवादः; वासुदेव एव[2] इति चेत्, कथं नापवर्गस्तैः [प्राप्यते]? तदर्थमुच्यते–

त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकम्
अश्नन्ति दिव्यान् दिवि देवभोगान् ॥ २१ ॥

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ २२ ॥

त्रैविद्या इत्यादि । ते तमित्यादि । यद्यपि ते मामेव यजन्ते । तथापि स्वर्गमात्रप्रार्थनया मितं कर्म निजसत्त्वदुर्बलतया स्वर्गादिमात्रेणैव फलेनावच्छिन्दन्ति । अत एवैषां पुनरावर्तको धर्मः । एवं ते गतागतं लभन्ते, न तु यागस्य पुनरावृत्तिप्रसवधर्मा स्वभावः ॥ २१-२२ ॥

तथा हि—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २३ ॥

---

1. S ब्रह्माप्तिः
2. S omits एव

अनन्या इति । तेभ्योऽन्ये मां चिन्तयन्तः । कथम्? अनन्या अविद्यमानं अन्यत् मद्व्यतिरिक्तं कामनीयं[1] फलं येषामिति । योगः, अप्रतिलब्धमत्स्वरूपलाभः । क्षेमम्, प्राप्तभगवत्स्वरूप-प्रतिष्ठालाभपरिरक्षणम्, येन योगभ्रष्टत्वशंकाऽपि न भवेत् इत्यर्थः ॥ २३ ॥

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २४ ॥

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २५ ॥

यान्ति देवव्रता देवान् पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥ २६ ॥

पत्रं पुष्पं फलं तोऽयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २७ ॥

येऽपीत्यादि प्रयतात्मनः इत्यन्तम् । येऽपि नामधेयान्तरै-रुपासते तेऽपि मामेवोपासते । न हि ब्रह्मव्यतिरेकि किञ्चिदुपा-स्यमस्ति । किन्तु अविधिना इति विशेषः । अविधिः अन्यो विधिः । नानाप्रकारैर्विधिभिरहमेव परब्रह्मसत्तास्वभावो याज्य इति ।

न तु यथा अन्यैर्दर्शनान्तरदूषणसमुपार्जितमहापातकम[2]-लीमसैर्व्याख्यातम् 'अविधिना, दुष्टविधिना' इति । एवं हि

1. B कमनीयं
2. S,B omit पातक—

सति 'मामेव यजन्ते, सर्वयज्ञानाञ्चाहमेव भोक्ता' इति दृश्यमानमेतदसमञ्जसीभवेत् इत्यलं कल्मषकलिलैस्साकं संलापेन ।

अस्मद्गुरवस्तु निरूपयन्ति—अन्या स्वात्मव्यतिरिक्ता भेदवादनयेन ब्रह्मस्वभावहीनैव काचिद्देवता इति गृहीत्वा तामेव [ये] यजन्ते तेऽपि वस्तुतो मामेव स्वात्मरूपं यजन्ते, किं तु अविधिना दुष्टेन विधिना भेदग्रहणरूपेण[1] इति ।

अत एवाह - न तु मां स्वात्मानं तत्त्वेन देवतारूपतया भोक्तृत्वेन जानन्ति, अतश्चलन्ति ते[2] मद्रूपात् । किम्? देवव्रतत्वेन देवान् यान्ति इत्यादि । एतदेव [3]चलनमिति यावत् । ये तु मत्स्वरूपमभेदेन[4] विदुः, ते देवभूतपितृयागादिनाऽपि मामेव यजन्ते[5] । ते च मद्याजिनो मामेव गच्छन्ति इत्युपसंहरिष्यति ।

ननु द्रव्यत्यागार्थमुद्दिष्टा देवता इत्युच्यते । तत् कथमनुद्दिश्यस्वात्मतत्त्वस्य याज्यत्वम्? आदित्यः प्रायणीयश्चरुः इति विधिशेषभूतदेवता उद्देशात्मकविध्यन्तरभावितो[6] ह्यसौ उद्देशः-(श्यः) । न च स्वात्मविषयो[7] विधिरस्ति इत्यभिप्रायेणाह—अविधिपूर्वकं मामिति । स्वात्मव्यतिरिक्तायां देवतायामस्ति

---

1. S,B भेदग्रहरूपेण
2. S,B,N च्यवन्ते
3. S'B,N च्यवन
4. B,N —स्वरूपभेवे(दं) न
5. N यजन्ति
6. B,N प्रभावितो
7. S,B,N omit विषयो

अपेक्ष्यो विधिः, अप्राप्तप्रापणरूपत्वात् । स्वात्मा तु परमेश्वरो न विधिपूर्वकः, विधिपरिप्रापितत्वाभावात्[1] । न हि तदनुद्देशेन किञ्चित्प्रवर्तते । तेन विधिपरिप्रापितेन्द्रादिदेवतोद्देशेषु सर्वेषु स[2] स्वात्मा विश्वावभासनस्वभावः तदुद्देश्यदेवतावभासभित्ति[3] स्थानीयतयैव अहमहमिकया सततावभासमानः स्रक्सूत्रकल्पः सततोद्दिष्टः इति युक्तिसिद्धमेतत्, 'मामेव यजन्ति अविधिपूर्वकत्वात्' [इति] । मुख्यभूतमत्प्राप्तिफलस्य तान्प्रति कर्त्रभिप्रायत्वं नास्ति, अपि तु परिमितदक्षिणास्थानीयेन्द्रादिपद[4]-मात्रप्राप्तेरेव[5] याजकवच्चरितार्थत्वमेषाम् इति प्रथयितुं परस्मैपदम् । यदुक्तं मयैव—

वेदान् वेद न वेद शाम्भवपदं दूयेत निर्वेदवान्
स्वर्गार्थी यजमानतां प्रतिजहज्जातो यजन् याजकः ।
सर्वाः कर्मरसप्रवाहविसराः[6] संवित्स्रवन्त्योऽखिलाः
स्वात्मा(स्वात्मा)नन्दमहाम्बुधिं विदधते नाप्राप्य पूर्णां स्थितिम् ॥ इति

एवं य उक्तक्रमेण वेत्ति तस्येन्द्रादिदेवतायागोऽपि परमेश्वरयाग इति ॥ २४-२७ ॥

यदपि अन्यत् कर्म, तदपि महेश्वरस्वात्मार्चनरूपं, तस्यैव सर्वत्रोद्देशात् इत्याह—

1. S,B,N—परिप्राप्यत्वाभावात्
2. S omits सः
3. B,N substitutes - भित्ति with -मिति—
4. B—येन्द्रपदातिमात्र; N येन्द्रपदादि- ; K (n)-इन्द्रादिपदमात्र—
5. B, K (n) प्राप्तय एव; N प्राप्त एव
6. K प्रसराः

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ २८ ॥
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २९ ॥

यत् करोषीति । शुभाशुभेति । देवतान्तरयाजिनो यतो मितमनोरथाः फलं लघयन्ति, अतस्त्वं सर्वं प्रागुक्तोपदेशक्रमेण मदर्पणं मन्मयत्वेव भावन[1] कुरु । एष एव च संन्यासयोग इति विस्तीर्णं विस्पष्टप्रायं पुरस्तादेव ॥ २८-२९ ॥

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ३० ॥
अपि चेत् सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३१ ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय प्रतिजानेऽहं न मद्भक्तः प्रणश्यति ॥ ३२ ॥

सम इत्यादि प्रणश्यतीत्यन्तम् । प्रतिजाने इति । युक्तियुक्तोऽयमर्थो भगवत्प्रतिज्ञातत्वात् सुष्ठुतयां दृढो भवति ॥ ३०-३२ ॥

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३३ ॥
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३४ ॥

---

1. S omits मन्मयत्वेन भावनम्.

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३५ ॥

॥ इति श्रीमद्भगवद्गीतायां नवमोऽध्यायः ॥

मां हि इत्यादि मत्परायण इत्यन्तम् । पापयोनयः पशुपक्षिसरीसृपादयः । स्त्रिय इति अज्ञाः । वैश्या इति कृष्यादिकर्मान्तररताः । शूद्रा इति कार्त्स्न्येन वैदिकक्रियानधिकृताः परतन्त्रवृत्तयश्च । तेऽपि मदाश्रिता मामेव यजन्ते । गजेन्द्रमोक्षणादीनि चरितानि हि परमकारुणिकस्य भगवतः सहस्रशः श्रूयन्ते । किमङ्ग पुनरेतद्विपरीतवृत्तयः ।

केचिदाचक्षते - द्विजराजन्यप्रशंसापरमेतद्वाक्यम्, न तु स्त्र्यादिषु अपवर्गप्राप्तितात्पर्येण इति । ते हि भगवतः सर्वानुग्राहिकां शक्तिं मितविषयतया खण्डयन्तः; तथा परमेश्वरस्य परमकृपालुत्वमसहमानाः[1]; 'न मे द्वेष्योऽस्ति न प्रियः', 'अपि चेत्सुदुराचारः' इत्यादीन्यन्यानि चैवंप्रकारस्फुटार्थप्रतिपादकानि वाक्यानि विरोधयन्तः; निरतिशययुक्तिप्रपञ्चसाधिताद्वैतभगवत्तत्त्वे[2] भेदलिङ्गं[3] बलादेवानयन्तः; अन्यांश्च आगमविरोधानचेतयमानाः; 'कथमिदं कथमिदम्' इति पर्यनुयोज्यमाना[4] यदि, परम् अन्तर्गर्भीकृतजात्यादिमहाग्रहाविष्टान्तः[5]-

---

1. S omits तथा - - - मसहमानाः
2. S,B,N भगवत्तत्त्वम्
3. S, B भेदभङ्गम्; N भेदभङ्ग—
4. B,N पर्यनुयुज्यमानः
5. B, N—ग्रहगृहीताविष्टान्तः—

करणाः; मात्सर्यावहित्थालज्जाचिह्नीकृतवाङ्मुखदृष्टयः; सम-ग्रस्य जनस्य 'असत्प्रलापित.' इति हास्यरसविषयभावमात्मनि[1] आरोपयन्ति। यत्पूर्वं व्याख्या सर्वस्य करोति शिवम् इति ॥ ३३-३५ ॥

॥ शिवम् ॥

अत्र संग्रहश्लोकः ।

अद्वैते ब्रह्मणि परा सर्वानुग्रहशालिनी ।
शक्तिर्विजृम्भते तेन यतनीयं तदाप्तये ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविर-
चिते श्रीमद्भगवद्गीतार्थसंग्रहे नवमोऽध्यायः ॥

॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. ३ (मू) निवर्तन्ते। नितरां वर्तन्त इत्यर्थः। तदेवाह व्याख्याने पुनःपुनरित्यादिना ॥

श्लो. ४ (व्या) गत्वेति। स्थितस्य कृते इति शेषः।

भूतरूपेत्यादि। भूतस्वरूपाणां पृथिव्यादीनां बोध्यात्मकानां बोध्यताविशिष्टानां यत् 'त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि' (सांख्यकारिका ११) इति प्रसिद्धं बोध्यतासमनियतं तदीयं भूतग्रामीयं जडत्वस्वरूपं तदेव पुरस्कृत्येत्यर्थः।

इत्येतदाहेति। न चाहं तेष्वेवस्थित इति मूलस्य न चाहं तेष्ववस्थितत्वेन प्राकृतैः दृष्ट इत्यभिप्राय इति भावः ॥

1. S omits—विषय—

श्लो. ५ (मू) ममात्मेति । शैषिकी षष्ठी संबन्धसामान्ये । 'निर्विशेषं न सामान्यम्' इति न्यायेन सामान्यस्य विशेषनिष्ठतया, प्रकरणात्, औचित्यात्, सम्बन्धान्तरासम्भवाच्च प्रकृते सामान्यः संबन्धः 'तादात्म्यम्, अभेद.' इति शब्दाभ्यां निर्दिष्टे संबन्धविशेषे पर्यवस्यति । तथा च अहंविमर्शरूप आत्मेत्यर्थः ।

भूतभावन इति । 'मदात्मना घटो वेत्ति' इत्युक्तरीत्या भूतानि सर्वाणि भावयन्ते । तत्र हेतुः ममात्मा इति । भूतभावनः । णिजन्तात् णिच् ॥

श्लो. ७ (मू) एवं हीति । आचार्येणाव्याख्यातस्यास्य पद्यस्य शिवाद्वैतवादजीवातुसमस्य काश्मीरीयमूलकोशेषूपलभ्यमानस्य काश्मीरीयें रामकण्ठादिभिर्व्याख्यातस्यायमर्थः— सर्वेष्वपि भूतभावेषु अचेतनतया चेतनतया च प्रसिद्धेषु चैतन्यं 'भूमिरापोऽनल' इति, 'अपरेयमितः' इति च (गीता VII, ४-५) पूर्वोपदर्शितरीत्या सर्वभूतप्रकृतिभूतं सत् वर्तत एव इति । चरामि तथापि अनभिलक्षित इति सहैव च विनैव च इति न विप्रतिषिद्धम् । लौकिकपारमार्थिकदृष्ट्या तदुपपत्तेः । तथाहि— परमार्थदर्शिनं प्रति उक्तभूतप्रकृतित्वेन सह चैतन्यं सर्वत्र चरति उपलभते । लौकिकम् उक्ततत्त्वादर्शिनं प्रति तु विनैव तेन चरति इत्यनभिलक्षितः इति तात्पर्यार्थः ।

श्लो. १०-११ (व्या) न च मेऽस्ति कर्मबन्धः औदासीन्येन वर्तमानोऽहं यत इति । यथाहुः—

'गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः' ।

(सांख्यकारिका-२०)

अनाश्रितव्यापारत्वात् हेतुरिति । तदुक्तं 'हेतौ' इति सूत्रे (*PA*, III, iii, 23) कैयटे—

'योग्यतामात्रप्रयुक्तोऽनाश्रितव्यापारोऽर्थो - - - - हेतुः'
—इति ।

अत्र योग्यता भ्रमप्रमासाधरणी बोध्या । इत्थं च प्रकृते गीताश्लोके मयाध्यक्षेणेति हेतौ तृतीया, हेतुनानेनेत्यस्य अनेन मदीयाध्यक्षत्वेन हेतुनेत्यर्थ इत्याचार्याभिप्रायः ॥

श्लो. १३ (मू) चैवेति । वा अपि इत्यर्थः ॥

श्लो. १६ (मू) ज्ञानेत्यादि । ज्ञानयज्ञेनेत्यस्य नित्ययुक्ता उपासते इति पूर्वतनेनान्वयः । तथा चात्रायमर्थः - महात्मानः ज्ञानयज्ञेन साधनेन मामेकत्वेन अद्वैतभावनया उपासते । अन्ये चापि लौकिकीं श्रौतदृष्टिमाश्रिताः बहुधा बहुप्रकारेण कर्मयोगात् कर्मसंबन्धात् बाह्यद्रव्यसाध्यैः यजन्तः विश्वतोमुखं विश्वरूपं मामेव पृथक्त्वेन अनेकतया भेदभावनया उपासते इति ॥

श्लो. १७-२० (अ) कारकेत्यादि । कारकाणां कलापेषु व्याप्तो यो भेदः परस्पराभावः तद्भूयिष्ठमित्यर्थः ॥

श्लो. १७ (मू) अहमेवाज्यमिति । अहमाज्यमपीत्यर्थः ॥

श्लो. १७–२० (व्या) एकस्यैवेत्यादि । स्वत एवैकस्य अद्वैतस्य ब्रह्मतत्त्वस्य निर्भागस्य निरंशस्य अखण्डस्य पुनरपि एकत्वमेव कर्म निर्वर्तयति, साधयति, तत्त्वविदः कृते निश्चाययति इत्यर्थः । एवं निर्वर्तने हेतुः परिकल्पितभेदवत्साधनाधीनतैव कर्मणः इति । उक्तं पूर्वमपि 'ब्रह्मार्पणं ब्रह्म हविः' इत्यादि ।

सर्वकारकेत्यादि । सर्वेष्वपि कारकेषु आत्मनः, चैतन्यस्य साक्षात्कारेण, सर्वकारकाणां संविद्रूपेणात्मना अभेदसाक्षात्कारेण सह कर्तुरवस्थाने सति, तस्य भगवत्प्राप्तिं प्रति उद्दिश्य अविदूरस्थत्वात् समीपस्थत्वात् इत्यर्थः ।

उपक्रमे इत्यादि । अस्मिंश्च पद्ये पूर्वार्धे भावाभावानुयायिनी इत्यस्य इमे भावाः सच्छब्दवाच्याः, इमे अभावाः असच्छब्दवाच्याः इति भेदमनुसृत्य यायिनी इत्यर्थः । अथवा अत्र चैतन्यस्य भावः, अत्र तु तस्याभाव इति चैतन्यभावाभावावनुसृत्य यायिनी इत्यर्थः । अथवा भाव इति पूर्वोपदर्शितदिशा (p 147) चैतन्यं वक्ति । तथा च दृश्येषु भावस्य चैतन्यस्य अभावमनुयाति जानातीति भावाभावानुयायिनी इत्यर्थः । एवं च उपक्रमे सृष्ट्युपक्रमे, संसारदशायामिति यावत्, या बुद्धिः अध्यवसायलक्षणा भावाभावाध्यवसायिनी इति पूर्वार्धार्थः । उत्तरार्धे सा अभावाभावानुयायिनी इति च्छेदः । तथाच उपसंहृतिकाले संसारव्युपरमदशायां सैव बुद्धिः भावाभावनुयायिनी – अस्य च पूर्ववदेवार्थः - न भवति इति अभावाभावानुयायिनी, अर्थात् सर्वत्र चैतन्यमात्मानं प्रत्यभिजानातीत्यर्थः । अथ वा भावाभावानुयायिनी इत्येव पदच्छेदः । भावेषु सत्पदवाच्येषु अभावेषु असत्पदवाच्येषु अं वासुदेवं परमात्मानम् अनुयाति प्रत्यभिजानातीति भावाभावानुयायिनी इत्यर्थः । 'अ-शब्दः स्यादभावेऽपि स्वल्पार्थप्रतिषेधयोः । अनुकम्पायां च तथा वासुदेवे त्वनव्ययः ॥' इति मेदिनी । भावाभाव+अ+ अनुयायिनी इति सवर्णदीर्घः । अस्य पद्यस्याङ्ग्लभाषानुवादस्तु अर्थान्तरमनुसरति ।

अत्रेदं तत्त्वम् - यः परमेश्वरो जगत्पतिः, तस्य परोन्मुखत्यागेन स्वात्मविश्रान्तिरूपत्वेन या स्फुरत्ता महासत्ता सैव आनन्द इति, भगवतश्चिदात्मतयैव सत्तादिरूपता । पशोस्तु सत्ता तदभावश्च, आनन्दश्च तदभावश्च; तस्य संकुचितरूपत्वात् । अतः अयं द्वयात्मा इति । अधिकं तु तत्त्वसंग्रहाधिकारे 'सत्तानन्दः क्रिया पत्युस्तदभावोऽपि सा पशोः' इति प्रत्यभिज्ञाकारिकाविमर्शिन्यां द्रष्टव्यमिति ।

प्रकृते च 'उपक्रमे' इत्यादिपद्ये अभिन्नसमपादो नाम पादाभ्यासात्मकः शब्दालङ्कारः । उक्तं च तल्लक्षणं काव्यप्रकाशे 'अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः' इति (IX. 117) । विस्तरस्तु तद्व्याख्यानेषु द्रष्टव्यः ॥

श्लो. २१-२२ (व्या) मितं कर्मेति । अत्र कर्म इति द्वितीयान्तं पदम् । द्वितीयार्थश्च कर्मत्वम् अवपूर्वकच्छिदधात्वर्थे अवच्छेदे अन्वेति । मितं प्रमितं, प्रमाणतो विदितं स्वर्गमात्रप्रार्थनया । तादृशप्रार्थनया प्रमितत्वमेव कर्मणोऽवच्छेदने हेतुरिति भावः । अथवा मितं परिमितमित्यर्थः । अथवा अमितमिति च्छेदः । इत्थं च स्वतः अमितमपि अनवच्छिन्नमपि निरवच्छिन्नानन्तानन्दब्रह्मप्रापकमपि कर्म यज्ञादिकं स्वर्गमात्रप्रार्थनया अवच्छिन्दन्ति, परिच्छिन्नफलदायकं कामकामाः कुर्वन्तीति वाक्यान्वयः । स्वर्गतिं प्रार्थयन्ते इति मूलस्याभिप्रायप्रदर्शकं स्वर्गमात्रप्रार्थनयेति । तस्योपव्याख्यानम् अमितं कर्म स्वर्गादिमात्रेणैव फलेनेति । अपरिमितस्य परिमितीकरणे हेतुः निजसत्त्वदुर्बलता ॥

श्लो. २३ (व्या) अप्रतिलब्धमत्स्वरूपलाभ इति । संसारावस्थायामविद्याप्रतिबन्धात् अलब्धमिव स्थितं यत् आत्मस्वरूपं तस्य लाभ इत्यर्थः। अथवा अप्रतिबद्धेति विवक्षितम् । अप्रतिबद्ध आत्मस्वरूपलाभ इत्यर्थः ॥

श्लो. २४-२७ (व्या) ननु अन्यदेवताभक्ताः इति व्याघातवचनम्, वासुदेवतत्त्वादन्यदेवताया अभावात् इत्यतः अभिप्रायमाह - नामधेयान्तरैरुपासते इति । एवं च इन्द्रादीनां नामधेयान्तरत्वमेव, अर्थात् वासुदेवोपासने करणान्तरत्वमेव, न तु देवतान्तरत्वमिति भावः । तदाह मामेवोपासते इति । तथा च मूले अन्यशब्दो नामधेयान्तरयुक्तपर इति आचार्याभिप्राय इव ।

अविधिः अन्यो विधिरिति । विधिरिति जातावेकवचनम् । अत एव विधिभिरित्याह । अत्र अन्यो विधिरित्यर्थवर्णनमात्रं, न तु विग्रहप्रदर्शनम्; विध्यन्तरमित्यापत्तेः । विग्रहस्तु न विधिरित्येव । नञर्थो भेदो भेदवान् वा; अन्यो विधिरित्यर्थप्रदर्शनस्वारस्यात् । अत्र विधिभिन्नार्थकत्वे अविधिशब्दस्य, उत्तरपदार्थप्रधानस्तत्पुष इति महाभाष्यवचनविरोधः । नञर्थस्य भेदस्य अनुयोगितया प्रतियोगितया वा, भेदवतो वा अभेदेन विधिपदार्थेऽन्वये प्रयोजनाभावः; व्यवहारदशायां भेदप्रतियोगित्वानुयोगित्वयोः, भेदस्य च केवलान्वयित्वात् । 'यावद्विकारं विभागः' इति न्यायाच्च । तथा च नञः यत्किञ्चिद्वस्तुप्रतियोगिकभेदे, तादृशभेदवति वा लक्षणाया वक्तव्यतया, तादृशवस्तुविशेषाकाङ्क्षायां समभिव्याहृतविधिशब्दार्थ एव औचित्यात् सामीप्याच्च हेतोरुपस्थित इति विधिप्रतियोगिकभेदवन्तो

विधय इत्यर्थे अविधिशब्दः पर्यवस्यति । न चैतादृशान्वयबोधोऽव्युत्पन्नः । 'भिन्नरुचिर्हि लोकः' इत्यादौ उक्तरीत्यैवान्वयबोधस्य सर्वानुभवसिद्धत्वात् । भिन्नशब्दार्थो भेदवान्, स नत्रर्थ एवेत्यत्र न विवादः । एवं च नानाविध्यर्थकत्वबोधः अविधिशब्दाल्लभ्यते । अथवा न विधिः (परः, अन्यः) येभ्यस्ते अविधयः' इति पञ्चमीबहुव्रीह्याश्रयणेन अविधिशब्दात् 'सर्वे विधयः' इत्यर्थलाभसंभवः इति मनसि कृत्वेवार्थं वर्णयति – नानाप्रकारैर्विधिभिरिति ।

अविधिना दुष्टविधिनेति । अत्र प्रकरणपरिशीलनेन, तथा मितमृदुभाषिण आचार्यस्य तीक्ष्णखण्डनेन चेदं प्रतिभाति — अत्राचार्येण परामृश्यमानानां व्याख्यातॄणां दृष्टया तदीयशास्त्रेतरशास्त्रेषु दृश्यन्ते ये विधयः ते दुष्टविधयः; निष्पक्षपातिनो भगवतो वाक्यस्य अविधिपूर्वकम् इत्यस्य तादृशारोपितदुष्टत्ववद्विधिपुरस्सरमित्यर्थ इति ।

तेऽपि वस्तुतो मामेव स्वात्मरूपं यजन्ते इति । अत्र यजन्तीति परस्मैपदेन भाव्यम्, मूलस्वारस्यात् । स्पष्टीभविष्यतीदमनुपदमेव ।

अतश्चलन्ति ते इत्युक्तेरभिप्रायं ज्ञातुं पृच्छति–किमिति । कथमित्यर्थः ।

उपसंहरिष्यतीति । एतावता प्रबन्धेन आचार्यैः 'अविधिपूर्वकम्' इत्यस्य 'नानाविधिपूर्वकम्' इत्यर्थः स्वाभिप्रायेणोपवर्णितः; परकृतव्याख्यायाम् असामञ्जस्यं प्रदर्शितम्; स्वगुरु-

कृतव्याख्यानमनूदितम्, तत्र च व्याख्याने औचित्यम् 'अत एवाह' इत्यादिना आविष्कृतम् ।

अत्रेदं चिन्त्यते – 'भिन्नरुचिः' इत्यत्र भिन्नशब्दो नाम-पदम्; नञ् तु निपातः । एवं स्थिते कथं तयोः समानयोग-क्षेमता अन्वयबोधे ? अन्यथा 'भिन्नरुचिर्हि लोकः' इत्यस्मिन्नेवार्थे 'अरुचिर्हि लोकः' इति प्रयोगस्यापि प्रामाणिकत्वापत्तेः । एवम् अविधिः इत्यत्र उक्तबहुव्रीह्याश्रयणं तथा निरुक्तार्थवर्णनं च न व्युत्पन्नम् । न हि भवति अघटपदात् सर्वघटबोधः प्रामाणिकः । इत्येवं विचिन्त्येव 'अविधि-पूर्वकम्' इत्यस्य विधि-पूर्वकं न भवतीति अर्थं वर्णयितुं भूमिकामारचयन्नाक्षिपति—नतु द्रव्यत्यागार्थमित्यादिना ।

वस्तुतस्तु 'न विधिः अविधिः' इत्यनुक्त्वा अन्यो विधिः अविधिः, नानाप्रकारैर्विधिभिः इति रीत्या विलिखत आचार्य-स्याभिप्रेतमिदमिव – 'नात्र नञ्तत्पुरुषः, उक्तदोषात्, अपि तु अ इत्यव्ययेन समासः । अन्येत्यस्यायम् अकारः, न तु नञः । यथोक्तं व्याख्यासुधायाम् (*AK*, III,iv,10),'अ विप्र इव भाषसे, इत्यादौ 'विप्रवन्न ब्रूषे' इति वक्तृबुबोधयिषितार्थप्रत्ययानुपपत्तेः । किं च अन्यदिति भिन्नमिति चानर्थान्तरं प्रसिद्धम् । 'भिन्नरुचि-र्हि लोक' इत्यादिषु भिन्नशब्दस्य नाना इत्यर्थे वृत्तिर्दृष्टचरा । इत्थं च तदभिन्नाभिन्नस्य तदभिन्नत्वम् इति रीत्या अ इति नाना इति च समानार्थकशब्दो भवितुमर्हत इति । परन्तु एतादृशार्थ-कत्वम् अ-शब्दस्य प्रयत्नतः साधनीयं भवति, प्रसिद्धेषु निघण्टुषु

तत्र तस्य शक्यप्रदर्शनात्। किं च पूर्वोक्तरीत्या 'भिन्नरुचिर्हि लोकः' इत्यर्थे 'अरुचिर्हि लोकः' इति प्रामाणिकप्रयोगापत्तिश्च। अत एवास्वरसात् 'अ शब्दः स्यादभावेऽपि' इति हैमकोशात् अभावार्थकेन अ इत्यव्ययेन नञा वा समासमङ्गीकृत्य व्याख्यानान्तरमारचयितुं तद्भूमिकात्वेन आक्षेपम् उत्थापयति—नन्विति, इत्यत्र सुधियः प्रमाणम्।

कथमनुद्दिश्येत्यादिना अवत्येन ग्रन्थेन एवं विवक्षितमिव—कथमनुद्देश्यस्य स्वात्मतत्त्वस्य याज्यत्वम्? 'आदित्यः प्रायणीयः पयसि चरुः' इति विधिशेषभूता हि देवता उद्देश्यात्मना विध्यन्तर्भाविता ह्यसौ उद्देश्यभूता अदितिरिति।'

'आदित्यः प्रायणीयश्चरुः' इति। संपूर्णविधिस्वरूपं तु' आदित्यः प्रायणीयः पयसि चरुः' इति मीमांसाग्रन्थेषूपलभ्यते। ज्योतिष्टोमे प्रायणीयेष्टिसंबद्धः पयसि संस्कृतश्चरुः होमद्रव्यविशेषः अदितिदेवताकः इति तदर्थः।

तान् प्रति कर्त्रभिप्रायत्वं नास्तीति। प्रतिरत्र कर्मप्रवचनीयः इत्थंभूताख्याने विषयत्ववति वर्तते। तथा च पूर्वोक्तानाम् अल्पेच्छावत्कर्तृणां विषये ईश्वरप्राप्तिरूपस्य महाफलस्य नास्ति कर्तृगामित्वेनाभिप्रेतत्वम् यच्चात्मनेपदप्रयोजकम् इत्यर्थः।

अत्रेदं स्वारस्यम् - येऽप्यन्येति गीताश्लोके यजन्ते श्रद्धयाऽन्विताः इत्यत्रात्मनेपदं विवक्षितम्, अन्यदेवताकयागजन्यस्य स्वर्गादेरल्पफलस्य कर्तृगामित्वेनाभिप्रेतत्वात्। तथा तत्रैव

श्लोके यजन्त्यविधिपूर्वकम् इत्यत्र परस्मैपदेनैव भाव्यम्; वासुदेवतत्त्वोद्देश्यकयागजन्यमहाफलस्य स्वात्मभूतेश्वरप्राप्तेः कर्तृगामित्वेनानभिप्रेतत्वात् इति ॥

श्लो. ३३-३५ (व्या) यत्पूर्वैव व्याख्येति । यत् यस्माद् कारणात् पूर्वमस्माभिः प्रदर्शितैव व्याख्या इति तदर्थः ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां नवमोऽध्यायः ॥

# दशमोऽध्यायः

प्राक्तनैर्नवभिरध्यायैर्य एवार्थो लक्षितः, स एव प्रतिपदपाठैरस्मिन्नध्याये प्रतायते । तथा चाह—'भूय एव' इति । उक्तमेवार्थं स्फुटीकर्तुं[1] पुनः कथ्यमानं शृण्विति । अर्जुनोऽपि एवमेवाभिधास्यति 'भूयः कथय' (X, 18) इति । इत्यध्यायतात्पर्यम् । शिष्टं निगदव्याख्यातमिति[2] किं पुनरुक्तेन ? सन्दिग्धं तु निर्णेष्यते ।

श्रीभगवानुवाच—

भूय एव महाबाहो शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥

न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥

यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥

बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवो भावो भयं चाभयमेव च ॥ ४ ॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ५ ॥

भूय इत्यादि पृथग्विधा इत्यन्तम् । असंमोहः उत्साहः ॥१-५॥

---

1. B,N,K विस्पष्टीकर्तुं
2. B - - व्याख्यानमिति

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

अयं सर्वस्य प्रभव इतः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥

महर्षय इत्यादि भास्वता इत्यन्तम् । परस्परबोधनया अन्योन्यबोधस्फारसंक्रमणात् 'सर्व एव हि प्रमातारः एक ईश्वर' इति विततव्याप्त्या[1] सुखेनैव सर्वशक्तिकसर्वगतस्वात्मरूपताधिगमेन[2] माहेश्वर्यमेषामिति भावः[3] ॥ ६-११ ॥

---

1. S,B,N विततय व्याप्त्या
2. S -ताधिशयनेन; अधिगमेन
3. After इति भावः B,N add 'तेषां सततयुक्तानाम्' इत्यतः प्रभृति अध्यायान्ता टीका उट्टङ्किता युगपद्धि वेद्या । 'तेषामेव' अनु च अर्जुनप्रश्नपद्यानि षट् उल्लिखति । श्रीभगवान् 'अथवा बहुना' इति पर्यन्तानि पद्यानि २३ वक्ति ॥

(Continued p. 176)

अर्जुन उवाच—

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥

आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥

स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ १५ ॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥

श्रीभगवानुवाच—

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

---

(Continued from page 175.)

These sentences are obviously of some copyist. It is to be noted however that the Mss. generally contain seven (not six) verses of Arjuna and then 24 (not 23) verses of the Bhagavān.

अहमात्मा गुडाकेश सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥

अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥

पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥

अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताहं विश्वतोमुखः ॥ ३३ ॥

मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक् च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥

बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ३७ ॥

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥

अथवा बहुनैतेन किं ज्ञानेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन जगत्स्थितः ॥ ४२ ॥

॥ इति श्रीमद्भगवद्गीतायां दशमोऽध्यायः ॥

हन्त ते कथयिष्यामीत्यादि जगत्स्थित इत्यन्तम् । 'अहमात्मा' (श्लो. २०) इत्यनेन व्यवच्छेदं वारयति । अन्यथा 'स्थावराणां हिमालय' इत्यादिवाक्येषु 'हिमालय एव भगवान् नान्य' इति व्यवच्छेदेन, निर्विभागत्वाभावात् ब्रह्मदर्शनं खण्डितम् अभविष्यत् । यतो यस्याखण्डाकारा व्याप्तिस्तथा चेतसि न उपारोहति, तां च [यो] जिज्ञासति तस्यायमुपदेशग्रन्थः । तथाहि उपसंहारे[1] भेदाभेदवादं 'यद्यद्विभूतिमत्सत्त्वम्' (श्लो-४१) इत्यनेनाभिधाय, पश्चादभेदमेवोपसंहरति 'अथवा बहुनैतेन - - - विष्टभ्याहमिदं - - - एकांशेन जगत् स्थितः' (श्लो-४२) इति । उक्तं हि—

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ इति—
RV. X, 90, 3

प्रजानां सृष्टिहेतुः सर्वमिदं भगवत्तत्त्वमेव तैस्तैर्विचित्रै [2]रूपैर्भाव्यमानं सकलस्य[3] विषयतां यातीति ॥ १९-४२ ॥

॥ शिवम् ॥

---

1. B उपसंहारेण
2. S तत्त्वमेतैस्तैर्विचित्रैः रूपैः; B,N —विचित्ररूपैः—
3. S,N सकलमस्य

अत्र संग्रहश्लोकः—

इच्छायामिन्द्रिये वाऽपि यदेवायाति गोचरम् ।
हठाद्विलापयंस्तत्तत् प्रशान्तं ब्रह्म भावयेत्[1] ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे दशमोऽध्यायः ॥

## ॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. १-५ (व्या) उत्साह इति । उत्साहयति प्रोत्साहयति इत्युत्साहः संमोहविरोधी असंमोहः ।

श्लो. ९ (मू) रमन्ति इति परस्मैपदं छान्दसम् ॥

श्लो. २८ (मू) प्रजन इति । प्रपूर्वकात् जनी प्रदुर्भावे इति धातोः अन्तर्भावितण्यर्थात् कर्तरि क्विपि, ङसि रूपं प्रजन इति । जातावेकवचनम् । प्रजनयितॄणामित्यर्थः । रामकण्ठोऽप्याह 'प्रजनः प्रजननक्रियाकर्ता, तस्य ; जातावेकवचनम्' इति । 'प्रजनस्यास्मि' 'प्रजनेष्वपि' इत्यपि पाठावुपलभ्येते मातृकासु ॥

श्लो. २९ (मू) संयमतामिति । 'छान्दसो यच्छादेशाभावः । केचिन्निपुणाः संयच्छतामिति पठन्ति' इति रामकण्ठः ॥

श्लो. ४२ (मू) ज्ञानेनेति रामकण्ठपाठः समादृतः । ज्ञायते अनेनेति ज्ञानम् उपदेशः, तेनेत्यर्थः ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां दशमोऽध्यायः ॥

1. S,B,N ब्रह्महा भवेत् । Probably प्रशान्तब्रह्मभाग्भवेत् is intended.

# एकादशोऽध्यायः

समनन्तरेणाध्यायेन य एवार्थ उक्तस्तमेव प्रत्यक्षीकर्तु-मर्जुनः पृच्छति[1] । यो ह्युपदेशक्रमेणार्थोऽवगतः स एव प्रत्यक्ष-संविदोपारुह्यमाणः स्फुटीभवति । तदर्थमेवेमे उक्तिप्रत्युक्ती उच्येते—

अर्जुन उवाच—

मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥

भवाप्ययौ हि भूतानां श्रुतौ विस्तरतो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वरम् ।
द्रष्टुमिच्छामि ते[2] रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगीश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥

श्रीभगवानुवाच—

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥

---

1. S,N,K (n) add स एव चायमुद्यमः after पृच्छति
2. K - - - - - - - - च्छाम्यहम

पश्यादित्यान् वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि पाण्डव ॥ ६ ॥

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे रूपमैश्वरम् ॥ ८ ॥

संजय उवाच—

एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः ।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः ॥ १२ ॥

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥

ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

अर्जुन उवाच—

पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसंघान् ।
ब्रह्माणमीशं कमलासनस्थं
ऋषींश्च सर्वानुरगांश्च दीप्तान् ॥ १५ ॥

अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ १६ ॥

किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्षं समन्ताद्
दीप्तानलार्कद्युतिमप्रमेयम् ॥ १७ ॥

त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः सात्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥

त्वमक्षरमिति । सात्वतधर्मगोप्तेति । सत् सत्यं क्रियाज्ञानयोरुभयोरपि भेदाप्रतिभासात्मकं [1]तथा सत्तात्मकं प्रकाशरूपं[2] तत्त्वं विद्यते येषां ते सात्वताः । तेषां धर्मः अनवरतग्रहणसंन्यासपरत्वात् सृष्टिसंहारविषयः सकलमार्गोत्तीर्णः, तं गोपायते । एतदेवात्राध्याये रहस्यं प्रायशो देवीस्तोत्रविवृतौ मया प्रकाशितम् । तत् सहृदयैः सोपदेशैः स्वयमेवावगम्यते इति किं पुनः पुनः स्फुटतरप्रकाशनवाचालतया ॥ १८ ॥

1. S,B,N,K (n) add परमगुरौ महादेवेऽर्पणम् before तथा. See Ag. XII, 11 and our note No. 13 thereon.

2. S,K (n) प्रकाशशीलम्

अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥

द्यावापृथिव्योरिदमन्तरं हि
व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाऽद्भुतं रूपमिदं तवेदृग्
लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥

अमी हि त्वा सुरसंघा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणन्ति ।
स्वस्तीति चोक्त्वैव महर्षिसंघाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ २१ ॥

रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसंघा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥

रूपं महत् ते बहुवक्त्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥

नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ २४ ॥

दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसंनिभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ २५ ॥

अमी सर्वे धृतराष्ट्रस्य पुत्राः
सर्वैः सहैवावनिपालसंघैः ।
भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ
सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥

वक्त्राणि ते त्वरमणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥

नानारूपैः पुरुषैर्बाध्यमाना
विशन्ति ते वक्त्रमचिन्त्यरूपम् ।
यौधिष्ठिरा धार्तराष्ट्राश्च योधाः
शस्त्रैः कृत्ता विविधैः सर्व एव ॥
त्वत्तेजसा निहता नूनमेते
तथा हीमे त्वच्छरीरे प्रविष्टाः ॥ २८ ॥

यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा व्रजन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्त्राण्यभितो ज्वलन्ति ॥ २९ ॥

यथा प्रदीप्तं ज्वलनं पतङ्गा
विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ ३० ॥

लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिः ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ३१ ॥

आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ३२ ॥

आख्याहि इति । तव प्रवृत्तिं न वेद्मि — **केनाशयेन** **ईदृशी** इयमुग्रता इति ॥ ३२ ॥

श्रीभगवानुवाच—

कालोऽस्मि लोकक्षयकृत् प्रवृद्धान्
लोकान् समाहर्त्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वा न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ३३ ॥

तस्मात् त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवेते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३४ ॥

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि लोकवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपत्नान् ॥ ३५ ॥

तस्मादिति । द्रोणमिति । तदत्र भगवता[1] उत्तरं जगतो विद्याविद्यात्मनः शुद्धाशुद्धमिश्रसंविद्बलग्रासीकारात् अभिधीयते इति प्रायशः सूत्रितमत्राध्याये रहस्यम् । उट्टङ्कितमात्र[2]-संवित्तिसमर्थेभ्योऽस्तु कियत्पङ्क्तिलेखनायासदौःस्थित्यमालम्बेमहि[3] ।

अत्र च यदुक्तं 'मया हतेषु त्वं निमित्तं यशस्वी भव' इति भगवता तत् प्रत्युक्तं यदुक्तं प्रागर्जुनेन 'नैतद्विद्मः[4] कतरन्नो गरीयः' इत्यादि ॥ ३४-३५ ॥

संजय उवाच—

एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।

---

1. S तदनु भवता; B.N तदत्रभवता
2. N—मात्रं
3. K आलम्बेमहि
4. B,N 'नचैतद्विद्मः

नमस्कृत्वा भूय एवाह कृष्णम्
सगद्गदं भीतभीतः प्रणम्य ॥ ३६ ॥

अर्जुन उवाच—

स्थाने हृषीकेश तव प्रकीर्त्या
जगत् प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसंघाः ॥ ३७ ॥

स्थाने इति । [1]प्रकीर्त्या, प्रकीर्तनेव ॥ ३७ ॥

कस्माच्च ते न नमेयुर्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।
अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत् तत्परं यत् ॥ ३८ ॥

कस्मादिति । सत् पदार्थत्वेन । असत् उपलम्भं प्रत्यविषयत्वात् । अथ वा अभावोऽपि धियि निजनिजविशिष्टवाचकसंश्लेषितो[2] ज्ञानाकारमश्नुवानो न[3] परब्रह्मसत्ताव्यतिरिक्तः । सदसद्रूपाभ्यां च परम्, तदुभयबुद्धितिरोधाने तद्रूपोपलब्धेः ॥ ३८ ॥

1. S प्रकीर्तिः प्रकीर्तनम्
2. B,N - - - वाचकवचसंश्लेषितो
3. S,B omit न

त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूपम् ॥ ३९ ॥

वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
अनादिमानप्रतिमप्रभावः
सर्वेश्वरः सर्वमहाविभूतिः[1] ॥ ४० ॥

नमो नमस्तेऽस्तु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ।
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ॥ ४१ ॥

नमो नम इति । नमोनम इत्यनेन पौनःपुन्यं भक्त्यतिशयाविष्कारकम् । यदेव भगवता अतिक्रान्ताध्यायैरभ्यधायि स्वस्वरूपम्, तदेव अर्जुनः प्रत्यक्षोपलम्भविषयापन्नं स्तोत्रद्वारेण प्रकटयति इति तद्व्याख्यानं केवलं पौनरुक्त्यप्रसङ्गायेति विरम्यते ॥ ४१ ॥

न हि त्वदन्यः कश्चिदपीह देव
लोकत्रये दृश्यतेऽचिन्त्यकर्मा ।
अनन्तवीर्योऽमितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ४२ ॥

1. K विभूते; विभूतिः इति रामकण्ठीयः पाठः

सखेति मत्वा प्रसभं यदुक्तो
हे कृष्ण हे यादव हे सखे च ।
अजानता महिमानं तवेमं
मया प्रमादात् प्रणयेन वापि ॥ ४१ ॥

यच्चावहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ४४ ॥

पितासि लोकस्य चराचरस्य
त्वमस्य विश्वस्य गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रमितप्रभावः ॥ ४५ ॥

तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियस्यार्हसि देव सोढुम् ॥ ४६ ॥

दिव्यानि कर्माणि तवाद्भुतानि
पूर्वाणि पूर्वेऽप्यृषयः स्मरन्ति ।
नान्योऽस्ति कर्ता जगतस्त्वमेको
धाता विधाता च विभुर्भवश्च ॥ ४७ ॥

तवाद्भुतं किं नु भवेदसह्यं
किं वा शक्यं परतः कीर्तयिष्ये ।
कर्तास्य सर्वस्य यतः स्वयं वै
विभो ततः सर्वमिदं त्वमेव ॥ ४८ ॥

अत्यद्भुतं कर्म न दुष्करं ते
कर्मोपमानं न हि विद्यते ते ।
न ते गुणानां परिमाणमस्ति
न तेजसो नापि बलस्य नर्द्धेः ॥ ४९ ॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ५० ॥

किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ५१ ॥

श्रीभगवानुवाच—

मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ५२ ॥

न वेदयज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ५३ ॥

मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ५४ ॥

संजय उवाच—

इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ५५ ॥

अर्जुन उवाच—

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५६ ॥

दृष्ट्वेति । सकलोपसंहारान्ते[1] परमप्रशान्तरूपो ब्रह्म तत्त्वस्थितिं ददाति इत्युपसंहारे भगवतः सौम्यता ॥ ५६ ॥

श्रीभगवानुवाच—

सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५७ ॥

---

1. S सकल: संहारान्ते

**नाहं वदैर्न तपसा न दानेन न चेज्यया ।**
**शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।। ५८ ।।**

**भक्त्या त्वनन्यया शक्यो ह्यहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।। ५९ ।।**

**मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ।। ६० ।।**

**।। इति श्रीमद्भगवद्गीतायामेकादशोऽध्यायः ।।**

भक्त्येति । मत्कर्मेति । अविद्यमानान्यज्ञेयरमणीया येषां भक्तिः परिस्फुरति तेषां ['ज्ञानवान्] मां प्रपद्यते[1] । वासुदेवः सर्वम्' (Gītā VII, 19) इत्यादिपूर्वाभिहितोपदेशचमत्कारात् विश्वात्मकं वासुदेवतत्त्वम् अयत्नत एव बोधपदवीमवतरति इति ।। ५९-६० ।।

।। शिवम् ।।

अत्र संग्रहश्लोकः—

शुद्धाशुद्धविमिश्रार्थ[2]संविदैक्यविमर्शनात्[3] ।
भूर्भुवस्वस्त्रयं[4] पश्यन् समत्वेन समो मुनिः ।।

।।इतिश्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे एकादशोऽध्यायः ।।

---

1. B,N omit मां प्रपद्यते
2. S —विमिश्रोर्थ -, K -मिश्रोत्थ
3. S,B,N प्रकाशनात् । S also gives an alternative reading विवेचनात् ।
4. B,N त्रयीं

॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. १८ (व्या) भेदाप्रतिभासात्मकमिति । इदं च तत्त्वज्ञानार्थकतत्त्वपदेनान्वेति ।

सत् सत्यमित्यादि । तदुक्तम्—

'सत्त्वं (च्च) सत्त्वाश्रयं सत्त्वगुणं सेवत केशवम् ।
योऽनन्यत्वेन मनसा सात्त्वतः समु(उ)दाहृतः ॥
विहाय काम्या[न्] कर्मादीन् भजेदेकाकिनं हरिम् ।
सत्यं सत्त्वगुणोपेतो भक्त्या तं सात्त्वतं विदुः ॥'

—पाद्मोत्तरखण्डे ९९ अध्याये,
(शब्दकल्पद्रुमे उद्धृतम्)

सात्वता इति । सत्वन्तः, त एवेत्यादिः । अधिकमन्यत्र ।

गोपायते इति । गुपू रक्षणे भ्वादिः परस्मैपदे पठितः ॥

श्लो. ३४-३५ (व्या) शुद्धाशुद्धेत्यादि - शुद्धाशुद्धमिश्रात्मकसंविदा बलेन ग्रासीकारादिति विग्रहः ।

समर्थेभ्योऽस्तु । समर्थेभ्यस्तु इत्येव वा विवक्षितमिव ॥

श्लो. ३८ (व्या) न परब्रह्मसत्ताव्यतिरिक्तः इति । न परब्रह्मसत्ताव्यतिरिक्तसत्ताक इत्यर्थः ॥

श्लो. ४१ (व्या) इत्यनेन पौनःपुन्यमिति । तृतीयार्थोऽभेदः । इत्येतदात्मकं पौनःपुन्यमित्यर्थः ॥

श्लो. ४४ (मू) सत्समक्षमिति रामकण्ठीयः पाठः समादृतः । सतां संनिधाविति तदर्थः ॥

श्लो. ४७ (मू) विभुः । विविधं शिवादिपृथिव्यन्तभेदेन भवतीति विभुः । अत एव भवति सर्वरूपेणेति भवः ॥

श्लो. ५२ (मू) आत्मयोगात् । त्वत्कर्तृकः आत्मविषयकः मदनुग्रहजन्यो यो योगः तस्माद्धेतोरित्यर्थः । पैतृष्वस्रेयत्वादिः यः आत्मनो वासुदेवस्य कृष्णस्य कौन्तेये अर्जुने योगः बन्धुत्वं तस्माद्धेतोरिति वा । 'विभाषा गुणेऽस्त्रियाम्' (*PA*. II, iii, 25) इति पञ्चमी ॥

श्लो. ५३ (मू) अहमिति नपुंसकम् अहंप्रत्ययवेद्यमभिदधाति ॥

श्लो. ५५ (मू) स्वकं रूपमिति । अल्पार्थे कः ॥

श्लो. ५६ (व्या) ददातीति । दधातीति वा विवक्षितमिव ॥

श्लो. ५९-६० (व्या) तेषाम् इत्यस्य बोधपदवीमित्युत्तरत्रान्वयः ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्याम् एकादशोऽध्यायः ॥

# द्वादशोऽध्यायः

अर्जुन उवाच—

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ।। १ ।।

एवमिति । एवम् उक्तेन नयेन ये सेश्वरब्रह्मोपासका ये च[1] केवलं आत्ममात्रमुपासते, तेषां विशेषाख्यानाय प्रश्नः।।१।।

श्रीभगवानुवाच—

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ।। २ ।।

मयीति । माहेश्वर्यविषयो येषां समावेशः अकृत्रिमस्तन्मयीभावः[2] ते युक्ततमा मम[3] मताः इत्यनेन प्रतिज्ञा क्रियते।।२।।

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ।। ३ ।।
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ।। ४ ।।
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ।। ५ ।।

---

1. S omits ये च
2. B, N तन्मयो भावः
3. S omits मम

येत्वित्यादि अवाप्यते इत्यन्तम् । ये पुनरक्षरं[1] ब्रह्म उपासते आत्मानं[तैरपि] सर्वत्रगम् इत्यादिभिर्विशेषणैः आत्मनः सर्वे ईश्वरधर्मा आरोप्यन्ते । अतो ब्रह्मोपासका अपि मामेव यद्यपि यान्ति; तथापि अधिकतरस्तेषां क्लेशः । आत्मनि किल अपहतपाप्मत्वादिगुणाष्टकारोपं विधाय पश्चात्तमेव उपासते इति स्वतःसिद्धगुणग्रामगरिमणि ईश्वरे[2] अयत्नसाध्ये स्थितेऽपि द्विगुणमायासं विन्दन्ति ।। ३-५ ।।

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ।। ६ ।।**
**तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।**
**भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ।। ७ ।।**
**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।**
**निवत्स्यसि त्वं मय्येव योगमुत्तममास्थितः ।। ८ ।।**

येत्वित्यादि आस्थित इत्यन्तम् । प्रागुक्तोपदेशेन[3] तु ये सर्वं मयि संन्यस्यन्ति, तेषामहं समुद्धर्त्ता सकलविघ्नादिक्लेशेभ्यः । चेतस आवेशनं व्याख्यातम् । तथा च एष एवोत्तमो योगः, अकृत्रिमत्वात् । तथा च मम स्तोत्रे—

विशिष्टकरणासनस्थितिसमाधिसंभावना-
विभावितया यदा कमपि बोधमुल्लासयेत् ।
न सा तव सदोदिता स्वरसवाहिनी या चिति-
र्यतस्त्वितयसन्निधौ स्फुटमिहापि संवेद्यते ।।

1. S ये त्वक्षरम्
2. B ईश्वरेऽपि
3. S प्रागुपदेशेन

यदा तु विगतेन्धनः स्ववशवर्त्तितां संश्रय-
न्नकृत्रिमसमुल्लसत्पुलककम्पबाष्पानुगः ।
शरीरनिरपेक्षतां स्फुटमुपाददानश्चितः
स्वयं झगिति बुध्यते युगपदेव बोधानलः ।
तदैव तव देवि तद्वपुरुपाश्रयैर्वर्जितं[1]
महेशमवबुध्यते विवशपाशसंक्षोभकम् ॥"

इत्यादि ॥ ६-८ ॥

अथावेशयितुं चित्तं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

अथेति । [2]तीव्रतरभगवच्छक्तिपातं[3] चिरतरप्रसादितगुरुचरणानुग्रहं च विना दुर्लभ आवेश इत्यभ्यासः ॥ ९ ॥

अभ्यासेप्यसमर्थः सन् मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥ १० ॥

अभ्यासेऽपीति । अभ्यासोऽपि न शक्यते विघ्नाद्यभिभवात्, अतस्तन्नाशाय कर्म पूजाजपस्वाध्यायहोमादीन् कुरु ॥ १० ॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

---

1. B—वपुरुपाशयैर्वर्जितं; N-वपुरुपाशयैर्वर्जितं (श्रितैर्वर्जितं)

2. N adds समाधातुं आवेशयितुं obviously accepting the reading अथ चित्तं समाधातुं as found in the Vulgate

3. B शक्तिपातचिरतर—

अथेति । यदि च भगवत्कर्म कर्तुं न शक्तोऽसि[1], अज्ञत्वात् शास्त्रोक्तक्रमावेदनात्; तत् सर्वं मयि संन्यसेः[2] आत्मनिवेदनद्वारेणेत्याशयः । अमुमेवाशयमाश्रित्य लघुप्रक्रियायां मयैवोक्तम्—

ऊनाधिकमविज्ञातं पौर्वापर्यविवर्जितम् ।
यच्चावधानरहितं बुद्धेर्विस्खलितं च यत् ॥
तत्सर्वं मम सर्वेश भक्तस्यार्तस्य दुर्मतेः ।
क्षन्तव्यं कृपया शम्भो यतस्त्वं करुणापरः ॥
अनेन स्तोत्रयोगेन तवात्मानं निवेदये[3] ।
पुनर्निष्कारणमहं दुःखानां नैमि पात्रताम् ॥ इति

पारमेश्वरेषु हि सिद्धान्तशास्त्रेषु आत्मनिवेदने अयमेवाभिप्रायः ॥ ११ ॥

तदिदं तात्पर्यमुपसंह्रियते—

श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरा ॥ १२ ॥

श्रेय इति । ज्ञानम् आवेशात्म अभ्यासाच्छ्रेयः[4], अभ्यासस्य तत्फलत्वात् । तस्मादेवावेशात् ध्यानं भगवन्मयत्वं विशिष्यते विशेषत्वं याति, अभिमतप्राप्त्या । सति ध्याने[5] भगवन्म-

1. N न शक्नोषि
2. N संन्यस्येः
3. S निवेदयेत्
4. S,B,N आवेशात्मा - - - श्रेयान्
5. S सति ध्यानेन; B,N प्राप्त्यासत्तिध्यानेन

यत्वे कर्मफलानि संन्यसितुं युज्यन्ते। अन्यथा अज्ञातरूपे[1] क्व संन्यासः? कर्मफलत्यागे च आत्यन्तिकी शान्तिः। अतः सर्वमूलत्वात् आवेशात्मकं ज्ञानमेव प्रधानम् ॥ १२ ॥

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।**
**निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥**

**संतुष्टः सततं योगी यतात्मा दृढनिश्चयः।**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ १४ ॥**

अद्वेष्टेति। सन्तुष्ट इति। मैत्री अमत्सरता यस्य[2] अस्तीति[3]। एवं करुणः[4]। 'ममामी' इत्यादिः[5] ममकारः; 'अहमुदारः' 'अहं तेजस्वी' 'अहं सहनः'[6] इत्यादिः अहंकारः; एतौ यस्य न स्तः। क्षमा अपकारिणं शत्रुं प्रत्य[प्य]द्वेषबुद्धिः। सततं योगी, व्यवहारावस्थायामपि प्रशान्तान्तःकरणत्वात् ॥ १३-१४ ॥

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः।**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

---

1. B,N रूपत्वे
2. N यस्मात् for यस्य
3. B omits इति
4. S,N करुणा
5. B ममापीत्यादि
6. S,B,N तेजस्वी असहनः

यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
शुभाशुभफलत्यागी भक्तिमान् यः स मे प्रियः ॥१७॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥
तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥ १९ ॥
ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

॥ इति श्रीमद्भगवद्गीतायां द्वादशोऽध्यायः ॥

यस्मादित्यादि मे प्रिया इत्यन्तम् । अनिकेतः—'इदमेव मया कर्तव्यम्' इति यस्य नास्ति प्रतिज्ञा । यथाप्राप्तहेवाकितया सुखदुःखादिकमुपभुञ्जानः परमेश्वरविषयसमावेशितहृदयः सुखेनैव प्राप्नोति परमकैवल्यम् इति ॥ १५-२० ॥

॥ शिवम् ॥

अत्र संग्रहश्लोकः—

परमानन्दवैवश्यसंजातावेशसंपदः ।
स्वयं[1] सर्वास्ववस्थासु ब्रह्मसत्ता ह्ययत्नतः ॥

इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे द्वादशोऽध्यायः ॥

---

1. S सेयम्

॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. १. (व्या) सेश्वरब्रह्मोपासक इति । ऐश्वर्यविशिष्टब्रह्मोपासका इत्यर्थः । वक्ष्यति चानुपदमेव माहेश्वर्यविषयो येषां समावेश इति । ऐश्वर्यं चात्र जगत्कर्तृत्वादि ।

अक्षरमिति मूलस्य व्याख्यानम् आत्ममात्रमिति । न क्षरति, न स्पन्दते, सृजति वा विश्वमिति अक्षरम्, निर्गुणम् अनुत्तरम् इत्यर्थः । क्षर संचलने स्रवणे च इति धातुपाठात् ॥

श्लो. ३-५ (व्या) आत्मानं सर्वत्रगम् इत्यादिभिरिति । तैरपीत्यादिः । अक्षरब्रह्मोपासकैरपीत्यर्थः ॥

श्लो. ६-८ (व्या) विशिष्टकरणेत्यादि स्तोत्रपद्ये 'संवेद्यते' इति कर्मणि लकारः स्वार्थकर्मत्वाश्रयतया प्रथमान्तमेकवचनमेकं पदमपेक्षते । एवं च, अपि नास्मिन् पद्ये चतुर्थपादे संनिधौ इत्यस्य स्थाने 'संनिधिः' इति विवक्षितम्? यद्येवं, तदा 'इहापि चित्यां वितयसंनिधिः संवेद्यते यतः' इत्यन्वयः । अथ वा 'सा' इत्यर्थात् सिद्धम् । सा चितिः इह वितयसंनिधौ अपि, तत्संनिधावेव संवेद्यते इत्यन्वयः ॥

श्लो. १२ (व्या) तत्फलत्वादिति । तत्फलकत्वादित्यर्थः ॥

श्लो. २० (मू) धर्मामृतमिति रामकण्ठीयः पाठः ।

(व्या) अनिकेत इति । निपूर्वः केतधातुः चुरादिः विमन्त्रणे वियोगकरणे नियमकरणे वर्तते इति कृत्वा तात्पर्यार्थमाह इदमेवेत्यादिना इति प्रतिभाति ।

स्थिरमतिरिति मूलस्य स्थिरे परमेश्वरे मतिर्यस्य स इति विग्रहमभिप्रेत्य तदर्थमाह - परमेश्वरविषयसमावेशितहृदय इति ।

सन्तुष्टो येन केनचिदित्यस्य व्याख्या यथाप्राप्तहेवाकितयेति । अपि नाम 'यथाप्राप्तं हेवाकितया' इति विवक्षितम् ? अधिकमुत्तरत्र ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां द्वादशोऽध्यायः ॥

# त्रयोदशोऽध्यायः

क्वचित् श्रुतौ 'क्षेत्रज्ञ उपास्यः' इति श्रूयते । स च किमात्मा, उत ईश्वरः अथ तृतीयः कश्चिदन्य एव? इति प्रश्नाशङ्कायाम्—

**श्रीभगवानुवाच—**

**इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेद तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।। १ ।।**

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ।। २ ।।**

श्रीभगवानादिशति—इदमिति, क्षेत्रज्ञमिति । संसारिणां शरीरं क्षेत्रम्, यत्र कर्मबीजप्ररोहः । अत एव तेषामात्मा आगन्तुककालुष्यरूषितः क्षेत्रज्ञ उच्यते । प्रबुद्धानां तदेव क्षेत्रम्। अन्वर्थभेदस्तु तद्यथा – क्षिणोति कर्मबन्धमुपभोगेन, त्रायते जन्ममरणभयात् इति । तांश्च प्रति परमात्मा वासुदेवः[1] क्षेत्रज्ञः। एतत्क्षेत्रं[2] यो वेद, वेदयति इत्यन्तर्भावितण्यर्थो[3] विदिः । तेन यत्प्रसादादचेतनमिदं चेतनीभावमायाति स एव क्षेत्रज्ञो नान्यः कश्चित् । विशेषस्तु परिमितव्याप्तिकं रूपमालम्ब्य आत्मेति भण्यते; अपरिच्छिन्नसर्वक्षेत्रव्याप्त्या परमात्मा भगवान् वासुदेवः। ममेति कर्मणि षष्ठी;अहमनेन ज्ञानेन ज्ञेयः इत्यर्थः ।।१-२।।

---

1. S,B वासुदेवाख्यः
2. S,N यो वेदयति । वेदेत्यन्तर्भा-; B यो वेदयति अन्तर्भा—
3. N—ण्यर्थोऽत्र

**तत्क्षत्रं यच्च यादृक् च यद्विकारि यतश्च यत् ।**
**स च यो यत्स्वभावश्च तत्समासेन मे शृणु ।। ३ ।।**
**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम् ।। ४ ।।**

तत्क्षेत्रमिति । ऋषिभिरिति । येन विकारं गच्छति यद्-विकारि । समासेनेति अविभागेनैव सर्वान्प्रश्नान्[1] साधारणोत्तरेण परिच्छिनत्ति । यद्यपि च ऋषिभिर्बहुधा वेदैश्चोक्तमेतत् । तथापि समासेनाहं व्याचक्षे इति ।। ३-४ ।।

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ।। ५ ।।**
**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ।। ६ ।।**

महाभूतानीति । इच्छेति । अव्यक्तम् प्रकृतिः । इन्द्रियाणि मनसा सह एकादश । इन्द्रियगोचराः रूपादयः पंच । चेतना दृक्छक्तिः पुरुषः । धृतिरिति [2]अन्ते किल सर्वस्य आ ब्रह्मणः क्रिमिपर्यन्तस्य प्रारब्धे निष्पन्ने वा कार्ये कामक्रोधादिषु च 'इयतैव मम पर्याप्तं, किमन्येन? ईदृशश्चाहं नित्यमेव भूयासम्' इति प्राणसन्धारिणी[1] धृतिः आश्वासनात्मिका पररहस्यशासनेषु रागशब्दवाच्या जायते ।। ५-६ ।।

एवं क्षेत्रं व्याख्यातम्, क्षेत्रज्ञश्च । इदानीं ज्ञानमुच्यते—

1. S,B,K एतान् (S तान्) प्रश्नान्
2 B,N अत्रान्ते किल
1. S,N -संधारणी; B -साधारणी

अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥

इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥

मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

अध्यात्मज्ञाननिष्ठत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

अमानित्वमित्यादि अन्यथा इत्यन्तम् । अनन्ययोगेनेति– 'परमात्मनो महेश्वरात् अन्यत् अपरं न किंचिदस्ति' इत्यनन्यरूपो यो निश्चयः, स एव योगः; तेन निश्चयेन मयि भक्तिः । अत एव सा न कदाचित् व्यभिचरति, व्यभिचारहेतुत्वाभिमतानां[1] कामनानामभावात्, तासामपि वा चित्तवृत्त्यन्तररूपाणां तदेकमयत्वात् । एवं सर्वत्रानुसन्धेयम् । एतद्विपरीतम् अज्ञानम्; यथा मानित्वादीनि ॥ ७-११ ॥

एतेन ज्ञानेन यत् ज्ञेयं तदुच्यते—

ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते ।
अनादिमत् परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

---

1. S,B,N - त्वाभिगतानाम्

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ १५ ॥

अविभक्तं विभक्तेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ १७ ॥

ज्ञेयमित्यादि विष्ठितमित्यन्तम् । 'अनादिमत् परं ब्रह्म' इत्यादिभिर्विशेषणैः ब्रह्मस्वरूपाक्षेपानुग्राहकं[1] सर्वप्रवादाभिहितविज्ञानापृथग्भावं कथयति[2] । एतानि च विशेषणानि पूर्वमेव व्याख्यातानि इति किं निष्फलया पुनरुक्त्या ॥ १२-१७ ॥

एतत् क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

एतदिति । एतत् [3]क्षेत्रज्ञानज्ञेयात्मकं त्रयं यो वेत्ति, स एव मद्भक्तः । स च मद्भावमेति ॥ १८ ॥

1. S —स्वरूपापेक्षानु—
2. S,B,N सर्वप्रवादान्तराभिहितपृथग्भावकमुच्यते
3. B,N क्षेत्रं

एतल्लक्षणं कृत्वा परीक्षा क्रियते–

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ।। १९ ।।**
**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ।। २० ।।**
**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।। २१ ।।**
**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ।। २२ ।।**

प्रकृतिमित्यादि पर इत्यन्तम् । प्रकृतिरप्यनादिः[1]; कारणान्तराभावात् । विकाराः पटादयः । प्रकृतिरिति कार्यकारणभावे हेतुः । पुरुषस्तु प्रधान्यात् भोक्ता । प्रकृतिपुरुषयोः पङ्ग्वन्धवत् किलान्योन्यापेक्षा वृत्तिः । अत एवास्य [पुरुषस्य] शास्त्रकृद्भिः नानाकारैर्नामभिरभिधीयते रूपम् 'उपद्रष्टा' इत्यादिभिः । अयमत्र तात्पर्यार्थः–प्रकृतिः तद्विकारः, चतुर्दशविधः सर्गः, तथा पुरुषः, एतत्सर्वम् अनादिनित्यं च ब्रह्मतत्वाच्छुरितत्वे सति तदनन्यत्वात् ।। १९-२२ ।।

तथा चाह–

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ।। २३ ।।**

---

1. B,N कार्यकारणप्रकृतिरप्यनादिः

य एवमिति । एवम् अनेन सर्वाभेदरूपेण ब्रह्मदर्शनेन यो योगी प्रकृतिं पुरुषं गुणांश्च तद्विकारान् जानाति, सर्वेण प्रकारेण यथा तथा वर्तमानोऽपि स[1] मुक्त एवेत्यर्थः ॥ २३ ॥

ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥

ध्यानेनेति । अन्य इति । ईदृशं च ज्ञानं प्रधानम् । कैश्चित् [आत्मा] आत्मतया उपास्यते; अन्यैः प्रागुक्तेन सांख्यनयेन; अपरैः कर्मणा; इतरैरपि स्वयमीदृशं[2] ज्ञानमजानद्भिरपि श्रवणप्रवणैः यथाश्रुतमेवोपास्यते । तेऽपि मृत्युं संसारं तरन्ति । येन केनचिदुपायेन भगवत्तत्त्वमुपास्यमानमुत्तारयति । अत. सर्वथा एवमासीतेत्युक्तम् ॥ २४-२५ ॥

यावत्किंचित्संभवति सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगि (?) तद्विद्धि भरतर्षभ ॥ २६ ॥

यावदिति । यत्किंचित् चरम् अचरं च तत् सर्वं क्षेत्रज्ञातिरेकि न संभवतीति ॥ २६ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

---

1. S,B omit सः
2. B,N ईदृग्

अत एव-

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिम् ॥ २८ ॥

सममिति । सर्वत्रैव समबुद्धिर्योगी आत्मानं न हिनस्ति दुस्तरे संसारार्णवे न पातयति[1] ॥ २८ ॥

प्रकृत्यैव हि कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥

प्रकृत्येति । यस्य हि ईदृशी स्थिरतरा बुद्धिर्भवति 'प्रकृतिरेवेदं करोति, नाहं किञ्चित्' इति[2] स सर्वं कुर्वाणोऽपि न करोति । एवमकर्तृत्वम् ॥ २९ ॥

यदि वा—

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥

अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३१ ॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

यदेत्यादि नोपलिप्यत इत्यन्तम् । विस्तीर्णत्वेन सर्वव्याप्त्या यदा भूतानां पृथक्तां भिन्नताम्[3] आत्मन्येव पश्यति,

---

1. B,N न हिनस्ति, न दुस्तरे संसारार्णवे पातयति ।
2. K omits इति ।
3. S विन्नताम्

आत्मन एव च उदितां तां मन्यते, तदापि सर्वकर्तृत्वात् न लेपभाक्; यतः असौ परमात्मैव शरीरस्थोऽपि न लिप्यते आकाशवत् ॥ ३०-३२ ॥

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥

यथेति । ननु एकः परमात्मा कथमनेकानि क्षेत्राणि व्याप्नोति? इत्याशङ्का प्रसिद्धेन रविणा दृष्टान्तेन अपाकृता । कृत्स्नं क्षेत्रम्, चराचराणि क्षेत्राणीत्यर्थः ॥ ३३ ॥

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥

॥ इति श्रीमद्भगवद्गीतायां त्रयोदशोऽध्यायः ॥

क्षेत्रेति । एवमध्यायेन यदुक्तं ज्ञेयं, ज्ञानं, क्षेत्रक्षेत्रज्ञयोरन्तरं, भूतप्रकृतेश्च[1] स्वल्पात् परिणामधर्मत्वात् मोचनम्, तत् ये ज्ञानलक्षणेन[2] सर्वत्राप्रतिहतेन अलौकिकेन चक्षुषा पश्यन्ति ते वासुदेवतां प्राप्य लभन्त एव परमं[3] शिवमिति ॥ ३४ ॥

॥ शिवम् ॥

अत्र संग्रहश्लोकः—

पुमान् प्रकृतिरित्येष भेदः संमूढचेतसाम् ।
परिपूर्णास्तु मन्यन्ते निर्मलात्ममयं जगत् ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे त्रयोदशोऽध्यायः ॥

---

1. B,N क्षेत्रक्षेत्रज्ञयोरन्तरं भूतप्रकृतेरन्तरं भूतप्रकृतेश्च
2. S,B,N येन ज्ञानलक्षणेन
3. B,N परं

## ॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. १-२ (व्या) क्षिणोतीति। क्षेणोतीति वा। क्षिणु हिंसायां तनादिः। उप्रत्ययनिमित्तस्य लघूपधगुणस्य विकल्पः; संज्ञापूर्वकविधेरनित्यत्वात् ॥

श्लो. ३-४ (व्या) यद्विकारि इति मूले विकारस्य गुणस्य यच्छब्दार्थप्रयुक्ततया 'तृतीया तत्कृतार्थेन गुणवचनेन' (*PA*, II, i, 30) इति तृतीयासमास इत्यभिप्रेत्यार्थमाह - येन विकारं गच्छतीति ॥

श्लो. ५-६ (व्या) प्रारब्धे निष्पन्ने वा कार्ये इति। वा इति चार्थे। प्रारब्धे कार्ये निष्पन्ने परिनिष्पन्ने समापिते च सति इत्यर्थः। कार्यस्य फले उत्पन्ने च सतीति यावत् ॥

श्लो. ७-११ (व्या) तेन निश्चयेनेति। तृतीयार्थः अभेदः भक्तावन्वेति। उक्तनिश्चयात्मिका मयि भक्तिरित्यर्थः।

एवं सर्वत्रानुसंधेयमिति। अमानित्वादिष्वपि 'अनन्ययोगेन' इत्यस्य योगोऽनुसंधेय इत्यर्थः ॥

श्लो. १९-२२ (व्या) प्रकृतिपुरुषयोः पङ्ग्वन्धवदित्यादिना पुरुषः प्रकृतिस्थो हि इति मूलं व्याख्यातम्।

तद्विकार इति। स च द्वात्रिंशत्संख्याकः। अनादीति। प्रागभावाप्रतियोगीत्यर्थः। नित्यमिति। ध्वंसाप्रतियोगीत्यर्थः।

ब्रह्मतत्त्वेत्यादि। ब्रह्मतत्त्वेन आ समन्तात् अविच्छेदेन छुरितत्वे प्रदीपितत्वे सतीत्यर्थः।

अत्र एतत्सर्वम् इत्यादिकं नानुमानप्रयोगप्रदर्शनपरम्, केवलान्वयिपक्षकत्वेन अनुपसंहारित्वापत्तेः। ईश्वराभ्युपगन्तॄणां योगानां मतेऽपि हेतुघटकसत्यन्तस्य प्रयोजनादर्शनेन अन्ततो व्याप्यत्वासिद्धिदोषप्रसंगाच्च ॥

श्लो. २४-२५ (व्या) आत्मतया उपास्यते इति। अत्र धात्वर्थ उपासना मानसज्ञानविशेषस्याविच्छिन्नप्रवाहरूपा। तद्घटकज्ञाने आत्मतयेति तृतीयार्थावच्छिन्नप्रकारताकत्वस्यान्वयः।

प्रागुक्तेन सांख्यनयेनेति। 'सांख्ययोगौ पृथग्बालाः प्रवदन्ति' इति, 'एकं सांख्यं च योगं च' इत्यादिना च पूर्वं पञ्चमाध्याये प्रदर्शितरीत्या सांख्यात्मकयोगेनेत्यर्थः। एवमासीत इति। एवमुपासीतेत्यर्थः ॥

श्लो. २६ (व्या) क्षेत्रज्ञातिरेकि न संभवति इति। इदं चाचार्यवचनं क्षेत्रक्षेत्रज्ञसंयोगात् इति समुपलभ्यमानेन मूलेन रामकण्ठेनाप्यङ्गीकृतेन विगीतमिव। अपि नामेदमाचार्यवचनमेवं ज्ञापयति यत् आचार्याभिमतः पाठः प्रायशः 'क्षेत्रक्षेत्रज्ञसंयोगि' इत्येवेति? क्षेत्रक्षेत्रज्ञाभ्यां सम्यक् योगः संबन्धः अस्येति तदर्थः। योगस्य सम्यक्त्वं च तादात्म्यमेव। अत एव अतिरेकि न भवति इत्याह। क्षेत्रज्ञातिरेकि इत्यस्य क्षेत्रं च ज्ञश्च ताभ्यामतिरेकि इति विग्रहः। एवं च मूलेनैकवाक्यता। अथवा क्षेत्रक्षेत्रज्ञातिरेकि इत्येव विवक्षितमाचार्येण। वस्तुतस्तु अस्मिन्नेवाध्याये पूर्वं, तथा अन्यत्र च तत्र तत्र दर्शितदिशा सर्वस्यापि चराचरात्मकस्य प्रपञ्चस्य ब्रह्मानन्यत्वात्, क्षेत्रस्यापि वस्तुतः

क्षेत्रज्ञानन्यत्वेन क्षेत्रक्षेत्रज्ञसंयोगीति मूलस्य क्षेत्रात्मकक्षेत्रज्ञादन्य इत्यर्थोऽभिप्रेत इति प्रदर्शयितुमाचार्येण क्षेत्रज्ञातिरेकि न इति लिखितमित्यत्र सुधियः प्रमाणम् ॥

श्लो. ३४. अत्र मूले तथा व्याख्याने क्षेत्रक्षेत्रज्ञयोरन्तरमित्यस्य तयोरन्तरमन्तरात्मानं चैतन्यमित्यर्थः । 'अन्तरमवकाशावधि - - - - मध्येऽन्तरात्मनि' इत्यमरात् । न तु 'तयोर्भेदम्' इति तदर्थः । तयोर्वास्तवभेदस्य तत्र तत्राचार्येण निरस्तत्वात् । अत एवानुपदमेव वक्ष्यति संग्रहपद्ये 'भेदः संमूढचेतसाम्' इति । उक्तं च पूर्वमपि क्षेत्रज्ञातिरेकि न संभवति' इति ॥

(व्या) भूतप्रकृतेश्चेत्यादि । भूतप्रकृतेः सकाशात् मोचने इदमेव निमित्तं यत् तदीयपरिणामधर्मस्य अल्पत्वं परिमितकालमात्रभावित्वमिति तात्पर्यम् ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां त्रयोदशोऽध्यायः ॥

# चतुर्दशोऽध्यायः

श्रीभगवानुवाच—

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥

परमिति । यदेव पूर्वोक्तं ज्ञानं, तदेव पुनः प्रकर्षेण प्रत्येकं गुणस्वरूपनिरूपणाय वैतत्येन[1] वक्ष्यामि । यज्ज्ञात्वा इत्यनेन अस्य ज्ञानस्य दृष्टप्रत्ययतां प्रसिद्धिं चाह ॥ १ ॥

इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥

इदमिति । 'व्यथन्ति' इति छान्दसत्वात् तिङ्प्रत्ययः । एवमन्यत्रापि सुप्तिङ्प्रत्यये वाच्यम् ॥ २ ॥

तत्रादौ संसृतौ क्रममाह । हातव्ये ज्ञाते तत्करणे च, सुकरं हि हानम्—

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥

ममेति । मम तावत् अव्यपदेश्यपरमानन्दरूपस्य महद् ब्रह्म बृंहकात्मीयशक्तिरूपं ब्रह्म । आत्मीयामेव हि विमर्शशक्तिमालम्ब्य अहमनादीन् आत्माणून् अनुग्रहार्थं संसारयामि ॥ ३ ॥

---

1. S अवैतत्येन

अत एव—

सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ।
तासां ब्रह्म महद् योनिरहं बीजप्रदः पिता ॥ ४ ॥

सर्वयोनिष्विति । सर्वासु योनिषु आदिकारणतया[1] बृंहिका भगवच्छक्तिः सकलसंसारजननस्वभावा[2] माता । पिता त्वहं शक्तिमान् अव्यपदेश्यः ॥ ४ ॥

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥

सत्त्वमिति । देही चायं आत्मतया सत्त्वरजस्तमोभिर्धर्मैः अपवर्गपर्यन्ताय भोगाय निबद्धयते ॥ ५ ॥

क्रमेणैषां रूपमुच्यते—

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥ ६ ॥

रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ।
तन्निबध्नाति कौन्तेय कर्मसंगेन देहिनम् ॥ ७ ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

तत्रेत्यादि भारतेत्यन्तम् । सत्त्वं निर्मलम् । तृष्णासंगस्य समुद्भवो यतः । दुर्लभस्यापि चिरतरसंचितपुण्यशत-

1. S,B आद्यकारणतया
2. B,K -वमनस्वभावा

लब्धस्य अपवर्गप्राप्तावेककारणस्य मानुष्यकस्य वृथा अतिवाहनं प्रमादः। तथाह्युक्तम्[1] —

आयुषः क्षण एकोऽपि सर्वरत्नैर्न लभ्यते।
स वृथा नीयते येन स प्रमादी नराधमः॥ इति[2]

आलस्यं शुभकरणीयेषु। निःशेषेण द्राणं कुत्सिता गतिः निद्रा॥ ६-८॥

---

1. B,N तथाभ्युक्तम्

2. S in the margin, and B,N in the text itself add the following:

यथा वा श्रीमद्भागवते —

निद्रया ह्रियते नक्तं व्यवायेन च वा वयः।
दिवा चार्थेहया राजन् कुटुम्बभरणेन वा॥ १॥
देहापत्यकलत्रादिष्वात्मसैन्येष्वसत्स्वपि।
तेषां प्रमत्तो निधनं पश्यन्नपि न पश्यति॥ २॥

—*The Bhagavata Purana* (Gorakhpur Ed.) II, i, verse 3-4

तथा—

किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह।
वरं मुहूर्तं विदितं घटेत श्रेयसे यतः॥ ३॥

—ibid., 12.

अयमेव प्रमादः तत्रैवैकादशस्कन्धे आत्महत्याशब्दवाच्यो निर्णीतो भगवता। यथा—

नृदेहमाद्यं सुलभं सुदुर्लभं
प्लवं सुकल्पं गुरुकर्णधारम्।
मयानुकूलेन नभस्वतेरितं
पुमान् भवाब्धिं न तरेत्स आत्महा॥ ४॥ इति

—ibid., XI, xx, 17.

सत्त्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥
रजस्तमश्चाभिभूय सत्त्वं भारत वर्धते ।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥

सत्त्वमिति । रज इति । संजयति योजयति । रजस्तमसी अभिभूय सत्त्वं वर्धते; रजस्तु सत्त्वतमसी, तमः सत्त्वरजसी ।

उक्तं हि—

'अन्योन्याभिभवेन गुणवृद्धिः' इति ॥ ९-१० ॥

सर्वद्वारेषु देहेऽस्मिन् प्रकाशमुपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥
लोभः प्रवृत्तिरारम्भः कर्मणामशमश्च वृट् ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥

सर्वेत्यादि कुरुनन्दनेत्यन्तम् । सर्वद्वारेषु, सर्वेन्द्रियेषु । लोभादयः[1] क्रमेणैव रजस्युद्रिच्यमाने जायन्ते । एवमप्रकाशादयः क्रमेणैव तमोविवृद्धौ[2] आविर्भवन्ति ॥ ११-१३ ॥

यदा सत्त्वे विवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४ ॥

---

1. S लोभादिकाः
2. B तमोवृद्धौ

रजसि प्रलयं गत्वा कर्मसंगिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

यदेति । रजसीति । यदा समग्रेणैव जन्मना अनवरतसात्त्विकव्यापाराभ्यासात् सत्त्वं विवृद्धं भवति, तदा प्राप्तप्रलयस्य शुभलोकावाप्तिः । एवं जन्माभ्यस्तराजसकर्मणः प्रयाणात् विमिश्रोपभोगाय[1] मानुष्यावाप्तिः[2] । तथा, तेनैव क्रमेण[3] यदा समग्रेण जन्मना तामसमेव कर्म अभ्यस्यते तदा नरकतिर्यग्वृक्षादिदेहेषु उत्पद्यते ।

ये तु व्याचक्षते 'मरणकाले एव सत्त्वादौ विवृद्धे एतानि फलानि' इति; ते न सम्यक् शारीरेऽनुभवे प्रविष्टाः । यतः सर्वस्यैव सर्वथा अन्त्ये क्षणे मोह एवोपजायते । अस्मद्व्याख्यायां च संवादीनि इमानि, श्लोकान्तराणि [च]॥ १४-१५ ॥

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ जायेते तमसोऽज्ञानमेव च ॥ १७ ॥

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥

---

1. B विशिष्टोपभोगाय; S,N (विशिष्टोप) विनिश्रोपभोगाय
2. S,B, N मानुष्याप्तिः
3. S substitutes क्रमेण with प्रकारेण

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

कर्मण इत्यादि अश्नुते इत्यन्तम् । अत्र केचिदसंबद्धाः श्लोकाः कल्पिताः, पुनरुक्तत्वात्[1] ते त्याज्या एव । एतद्गुणातीतवृत्तिस्तु[2] मोक्षायैव कल्पते ॥ १६-२० ॥

अर्जुन उवाच—

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥

कैरिति । [3]ननु यदि अयं देही, तत् कथं गुणातीतो भवति ? सर्वथैव हि कयाचित् चित्तवृत्त्या वर्तते, सा च त्रैगुण्यादन्यतमा अवश्यं भवति । अनेन अभिप्रायेण पृच्छति अर्जुनः॥२१॥

अत्रोत्तरम्—

श्रीभगवानुवाच—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥

---

1, B पुनरुक्तार्थत्वात्
2. N गुणातीतश्रुतिस्तु
3. S ननु यदि देही; B ननु कथं देही गुणा- ;
N ननु देही कथं गुणा-

प्रकाशमिति । यद्यपि प्रकाशादिकाः सर्वेषु धर्मेषु[1] वर्तन्ते; तथापि योगिनस्तेषु प्रकाशादिषु न रज्यन्ते; नापि द्वेषवन्तो भवन्ति । अपि तु 'केवलपिण्डधर्मतया एते स्थिताः, न मां क्षोभयितुमलम्' इति मन्वाना गुणातीता भवन्ति ॥ २२ ॥

अत एवाह—

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव यो(ऽ)ज्ञस्तिष्ठति नेङ्गते ॥ २३ ॥

समदुःखसुखस्वप्नः समलोष्टाश्मकांचनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥

मानावमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भफलत्यागी गुणातीतः स उच्यते ॥ २५ ॥

उदासीनवदित्यादि उच्यते इत्यन्तम् । यः अज्ञो निर्विवेकस्तिष्ठति स एव ज्ञः, सम्यग्ज्ञानात् । तथा हि नेङ्गते न स्वरूपात् च्यवते । अत्र चोपायः 'शरीरेन्द्रियादिस्वभाव[2] एषः, यत् प्रवर्तनम्,[3] न तु फलं किंचिदहमभिसन्दधे' इति स्थिरा बुद्धिः[4] ॥ २३-२५ ॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥

---

1. S,B,N सर्वधर्मेषु ।
2. S,B,N चोपायः सर्वेषामारंभाणां शरीरारंभकेन्द्रियादि-
3. N प्रवर्तते
4. N स्थिरबुद्धिः

मां चेति । अनेन मूलभूतमुपायमुपदिशति । च शब्दोऽवधारणे—यो मामेव सेवते । अनेन फलादिसाकाङ्क्षो मामङ्गत्वेनाश्रयति, फलं प्रधानतया इति निरस्तः । अत एव न अस्याव्यभिचारिणी भक्तिः; फलं प्रति ह्यसौ आस्थावान् इति । यस्तु फलं किंचिदपि अनभिलष्यन् 'किमेतदलीकमनुतिष्ठसि'[1] इति पर्यनुयुज्यमानोऽपि, निरन्तरभगवद्भक्तिवेधविद्रुतान्तःकरणतया [2]कण्टकितरोमवान्, वेपमानतनुः [3]विस्फारितनयनयुगलपरिवर्तमानसलिलसंपातः तूष्णींभावेनैवोत्तरं प्रयच्छति, स एवाव्यभिचारिण्या भगवतो महेश्वरस्य अग्रशक्त्या[4] भक्त्या पवित्रीकृतो नान्य इति ज्ञेयम् ॥ २६ ॥

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥

॥ इति श्रीमद्भगवद्गीतायां चतुर्दशोऽध्यायः ॥

ब्रह्मण इति । अहमेव हि ब्रह्मणः प्रतिष्ठा । मयि सेव्यमाने ब्रह्म भवति; अन्यथा जडरूपतया ब्रह्म उपास्यमानं मोक्षमपि सौषुप्तादविशिष्टमेव प्रापयेत् इति ॥ २७ ॥

॥ शिवम् ॥

---

1. B,N किमिति तदलीक –
2. S उत्कण्टकित—
3. B,N विस्फारतरनयन—
4. N उग्रशक्त्या

**अत्र संग्रहश्लोकः—**

**लसद्भक्तिरसावेशहीनाहंकारविभ्रमः ।**
**स्थितोऽपि[1] गुणसंमर्दे गुणातीतः समो यतिः[2] ॥**

**॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे चतुर्दशोऽध्यायः ॥**

**।। श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ।।**

श्लो. २ (मू) **मम साधर्म्यम्** – मत्स्वरूपम् ।

(व्या) **तिङ्प्रत्यय इति** । झिप्रत्यय इत्यर्थः ।।

श्लो. ३ (मू) **योनिः** - जगदुत्पत्तौ निमित्तम् । **गर्भम्** चैतन्यम् ।

(व्या) **बृह्मकेत्यादिना** शक्तौ ब्रह्मपदयौगिकार्थसंबन्धो दर्शितः । बृहत्त्वमहत्त्वयोरनर्थान्तरत्वात् शक्तिरूपब्रह्मैव महत् ।।

श्लो. ४ (मू) अत्र पूर्वार्धेन लोकदृष्टयनुवादः, उत्तरार्धेन तु तत्त्वप्रदर्शनम् ।

श्लो. ५ (मू) **प्रकृतिसंभवाः**- भगवच्छक्तिः योनिः प्रकृतिः ब्रह्मपदनिर्दिष्टा पूर्वतनपद्ययोः, तत्संभवाः । देहिनमित्यनेन अव्ययस्याप्यात्मनो बन्धप्राप्तौ हेतुर्दर्शितः ।

---

1. N स्थितेऽपि
2. S,B,N यतः

(व्या) **आत्मतयेति**। आत्मा तयेति विवक्षितम्। **अयमात्मा तया प्रकृत्या कर्त्र्या सत्त्वादिभिर्गुणैः करणैः निबध्यते** इत्यन्वयः। अथवा निबद्ध्यते इति कर्मकर्तरि लकारः। तथा चाव्ययः परमात्मा देही सन् स्वयमेव बध्यते इति। तत्र हेतुः **आत्मतयेति**। अप्रतिहतस्वातन्त्र्येण स्वयमेवेत्यर्थः॥

श्लो. ६-८ (व्या) **मानुष्यकस्येति**। स्वार्थे कन्।

'नैव जागरतः' इति परिमितनिद्राया: योगसिद्ध्युपयोगिताया दर्शितत्वात् प्रकृते **निद्राशब्दो** यौगिक एवेति तमर्थं दर्शयति—**कुत्सिता गतिर्निद्रा इति**। द्रा कुत्सायां गतौ इत्यदादेर्धातोः प्रायशो निपूर्वकात् 'आतश्चोपसर्गे' (*PA*. III, i, 106) इत्याङि **निष्पन्नो** निद्राशब्दः कुत्सितगतिवाचकः॥

श्लो. ९ (मू) **उतेति**। उतापीत्यर्थः॥

श्लो. ११ (मू) **प्रकाशमिति** क्रियाविशेषणम्। स्फुटमित्यर्थः॥

श्लो. २१ (मू) **कैर्लिङ्गैरिति** 'इत्थंभूतलक्षणे' (*PA*, II, iii, 21) तृतीया। अथ वा 'धूमेन लिङ्गेन वह्निमान् पर्वत' इत्यादाविव प्रकृतेऽपि लिङ्गशब्दः अनुमानप्रयोगद्वितीयावयवात्मकहेतुपरः। हेतुत्वं च ज्ञानज्ञाप्यत्वम् भवत्यर्थे अस्तितायामन्वेति। तथा च किंविषयकज्ञानज्ञाप्यास्तितावान् गुणातीतः? इति पर्यवसितार्थः। गुणातीतत्वं केन हेतुना ज्ञाप्यमिति यावत्। अत्र कैः, किम्, कथमिति त्रयमप्याक्षेपे। तदेव दर्शयति व्याख्याने **नन्वित्यादिना**।

**चित्तवृत्त्ये**ति । सहार्थयोगे तृतीया ।

**त्रैगुण्यादन्यत**मेति । त्रिगुणात्मकत्वाद्धेतोः त्रैगुण्येष्वन्यतमेत्यर्थः ॥

श्लो २२. (व्या) **धर्मेष्वि**ति । धर्मतयेति विवक्षितमिव । अत एवाह अनुपदमेव 'केवलपिण्डधर्मतया' इति ॥

श्लो. २३ (मू) **एवे**त्यप्यर्थे ।

श्लो. २३-२५ (व्या) **यः अज्ञः - - - स एव ज्ञः** इति । तथा च 'योज्ञ' इति मूलस्य 'यः अज्ञः' इति, तथा 'यः ज्ञः' इति चोभयथा छेदो विवक्षित इति भावः ॥

श्लो. २६ (व्या) **अत एव,** फलप्रधानत्वादेव ॥

श्लो. २७ (व्या) **जडरूपतये**ति । न हि जडरूपं ब्रह्म; न वा जडत्वेनोपास्यमानं ब्रह्म मोक्षप्रदम्, तादृशोपासनाया विपरीतज्ञानत्वेन बन्धकत्वात् । तस्मात् अत्रायमर्थो विवक्षितः– जडस्य रूपमिव रूपं यस्य तत्, तस्य भावः जडरूपता, तयेति । सन्मात्ररूपतयेति पर्यवसितार्थः । स्पष्टमग्रे ॥

॥ इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां चतुर्दशोऽध्यायः ॥

## ॥ पञ्चदशोऽध्यायः ॥

**श्रीभगवानुवाच—**

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

**अधश्चोर्ध्वं प्रसृता यस्य शाखा**
**गुणप्रवृद्धा विषयप्रवालाः ।**
**अधश्च मूलान्यनुसन्ततानि**
**कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

ऊर्ध्वमूलमिति । अधश्चेति । अनेन शास्त्रान्तरेषु यदुच्यते 'अश्वत्थः सर्वं, स एवोपासनीयः' इत्यादि, तस्य भगवद्ब्रह्मोपासा तात्पर्यमित्युच्यते । मूलं प्रशान्तरूपम्[1] । तत् ऊर्ध्वं, सर्वतो हि निवृत्तस्य तदाप्तिः । छन्दांसि पर्णानि इति— यथा वृक्षस्य मानत्वफलवत्त्वसरसतादयः[2] पर्णैः सूच्यन्ते, एवं ब्रह्मतत्त्वस्य वेदोपलक्षितशास्त्रद्वारिका प्रतीतिरित्याख्यायते । गुणैः, सत्त्वादिभिः प्रवृद्धाः, देवादिस्थावरान्ततया । तस्य च शुभाशुभात्मकानि कर्माणि अधस्तनमूलानि[3] ॥ १-२ ॥

**न रूपमस्येह तथोपलभ्यते**
**नान्तो न चादिर्न च संप्रतिष्ठा ।**
**अश्वत्थमेनं सुविरूढमूलम्**
**असंगशस्त्रेण शितेन छित्त्वा ॥ ३ ॥**

---

1. K प्रशान्तं रूपम्
2. S,B फलत्व-
3. B,N -मूलानि यस्य

ततः पदं तत् परिमार्गितव्यं
यस्मिन् गतो न निवर्तंत भूयः ।
तमेव चाद्यं पुरुषं प्रपद्येद्
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

निर्मानमोहा जितसंगदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥

न रूपमित्यादि अव्ययं तदित्यन्तम् । तं छित्त्वेति । विशेष्ये क्रियाऽभिधीयमाना सामर्थ्यादत्र विशेषणपदमुपादत्ते 'दण्डी प्रैष्याननुब्रूयात्' इति विधिवत् । तेन अधोरूढानि मूलानि अस्य छिन्द्यादिति । तत् पदं प्रशान्तम्; अव्ययं पदं तदेव ॥ ३-५ ॥

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

न तदिति । सूर्यादीनां तत्रानवकाशः । तेषां कालाद्यवच्छेदात्, वेद्यत्वात्, करणोपकारकत्वात् । तस्य तु दिक्कालाद्यनवच्छेदात्, वेदकत्वात्, करणप्रवर्तकत्वात्, तदतीतत्वात् ॥ ६ ॥

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

ममेति । ब्रह्मण एवायमंश इति । अज्ञानधर्मतया परिपूर्णस्य असंवेदनात् चेतनताऽनिवृत्तेश्च अंशत्वमुपचरितम्; [1]न पुनर्वस्तुतः अंशवत्तोपपद्यते । 'प्रदेशोऽपि ब्रह्मणः सार्वरूप्यमनतिक्रान्तः' इति हि श्रुतिः[2] । एषैव च औपचारिकता यथावसरं योजनीया इति न विप्रतिपत्तव्यम् ।। ७ ।।

**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ।। ८ ।।**

शरीरमिति । अवाप्नोति, गृह्णाति । उत्क्रामति त्यजति एतैः सह । यथा वायुः सर्वगतो विश्रान्तिधाम पार्थिवं प्राप्य ततो गन्धमानीय स्थानान्तरे तत्सहित एव संक्रामति, एवं जीवः पुर्यष्टकेन सह ।। ८ ।।

एवं सृष्टौ संहारे च एतैः साहित्यमस्योक्त्वा स्थितावपि स्थानासनमननादिरूपायां[3] विषयग्रहणात्मिकायां[4] तत्सहितस्यैवास्य व्यापार इति निश्चीयते—

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ।। ९ ।।**

**तिष्ठन्तमुत्क्रामन्तं वा भुञ्जानं वा गुणान्वितम् ।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ।। १० ।।**

---

1. B,N omit न
2. N श्रुतेः
3. N ममतादि-
4. B omits स्थितावपि - - - त्मिकायाम्

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ।। ११ ।।**

श्रोत्रमित्यादि अचेतस इत्यन्तम् । मनः इत्यनेनान्तःकरणमुपलक्ष्यते । अत एव शरीरस्थितियोगात्तिष्ठन्तम्; शरीरान्तरग्रहणाय उत्क्रामन्तम्; विषयान्वा भुञ्जानं मूढा न पश्यन्ति, अप्रबुद्धत्वात् । प्रबुद्धास्तु सर्वत्रैव बोधरूपमेव अनुसंदधाना[1] जानन्त्येव, इत्यलुप्तसमाधयः, तेषां यत्नपरत्वात् । अकृतात्मनां तु यत्नोऽपि न फलाय, अपरिपक्वकषायत्वात् । न हि शरदि सलिलादिसामग्रीसंमर्देऽपि धान्यबीजानि उप्यमानानि फलसंपदे अलम् । अत एव सामग्री एव सा अस्य न भवति । अन्यदेव किल[2] मधुमाससंभृतजलधरपटलीप्रेरितमम्भः; काचिदेव च सा भूः, यस्यां शिशिरविवशीकृतायां[3] रविकरस्पर्शेनैव कान्तिः । एवम् अकृतात्मनां यत्नो न सकलाङ्गपरिपूर्णत्वमायाति[4] । अत एव प्राप्याप्युपायं पारमेश्वरदीक्षादि[5] ये तथाविधक्रोधमोहादिग्रन्थिसन्दर्भगर्भीकृतान्तर्दृशः,[6] तेषु उपाय एव साकल्यं न भजतीति मन्तव्यम् । यदुक्तम्[7]—

1. S,B,N - रूपमनुसंदधानाः
2. S omits किल
3. S,B,N शिशिरवशविवशी-
4. B,N परिपूर्णः कर्तुमायाति
5. B परमेश्वर-
6. B सन्दर्भीकृतान्तर्दृशः
7. S,B,N तदुक्तम्

'क्रोधादौ दृश्यमाने हि दीक्षितोऽपि न मुक्तिभाक् ।'
इति ॥ ९-११ ॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥**
**गामाविश्य च भूतानि धारयाम्यहमोजसा ।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥**
**अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः ।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

यदादित्येत्यादि चतुर्विधमित्यन्तम् । अर्कादितेजस्त्रयरूपतया दशमाध्यायसूचितसृष्टिस्थितिसंहार[कर्तृत्व?]प्रकटीकरणे श्रीगुरवः प्राहुः[1]—भूतपञ्चकस्य समस्तव्यस्ततया यल्लोकधारकत्वं[2] तद्भगवत एव माहेश्वर्यमित्येतदनेन [उक्तमिति]। तथाहि—रवितेजसः प्रकाशकत्वं धारकत्वं च तेजोधराद्वयतादात्म्यात् । तदेतदुक्तम् 'यदादित्यगतम्' इति 'गामाविश्य च' इति चार्धद्वयेन । चान्द्रं तेजः प्रकाशकं पोषकं च, धराजलतेजोयोगात्[3] । तदुक्तम् 'यच्चन्द्रमसि' इत्यनेन भागेन 'पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः[4]' इति चार्धश्लोकेन । वाह्नं तु तेजः प्रकाशनशोषणदहनस्वेदनपचनात्मकं पृथिव्यप्तेजोवायुयोगात् । तदेतदिहोक्तम्[5] 'यच्चाग्नौ' इत्यनेन,

---

1. B,N श्रीगुरवस्त्वाहुः
2. B लोकद्वयाधारकत्वं च
3. K. omits धरा
4. B,N omit चौषधीः - - -त्मकः
5. N तदेवेहोक्तम्

'अहं वैश्वानरः' इत्यनेन च[1]। नभस्तु बोधावकाशरूपतया सर्वगतमेव ।। १२-१४ ।।

अत एव बोध्यरूपतामुक्त्वा तद्बोध्यस्वरूपपृष्ठपतितस्वातन्त्र्यबोधस्वभावमात्मानं परस्वभावं परमेश्वररूपं[2] सर्वज्ञानस्वतन्त्रं सर्वकर्तारं दर्शयितुमाह—

**सर्वस्य चाहं हृदि सन्निविष्टो**
**मत्तः स्मृतिर्ज्ञानमपोहनं च ।**
**वेदैश्च सर्वैरहमेव वेद्यो**
**वेदान्तकृद्वेदकृ(?)देव चाहम् ।। १५ ।।**

सर्वस्येति । सर्वस्य वेद्यस्य यत् हृत् समस्ताहरणस्वतन्त्रबोधस्वभावं, तत्र अहमिति यो विमर्शः; तत एव अपूर्वाभासनामयं[3] ज्ञानं विश्वमहासृष्टिरूपम्; 'अयं घट एव' इति सर्वात्मकभावखण्डनासारं विकल्पज्ञानात्मकमपोहनं[4] पाशवसृष्टिरूपमायामयप्रमातृचितम्; स्मरणं च संस्कारशेषतां नीतस्य संहृतस्य पुनरवभासनात्मकमिति । इयता समस्तज्ञानानि संहृतानि इति सर्वज्ञतापूर्वकं स्वातन्त्र्यरूपं कर्तृत्वमुक्तम् । सर्वैरिति—संभूय किल सर्वशास्त्राणां परमेशतत्त्वमेव निरूप्यम् । वेदवेदान्तकर्तृत्वेन कर्मफलतत्संबन्धादिद्वारतया अशेषविशेषनिर्माणे, तदुन्मूलनेन पुनः स्वरूपप्रतिष्ठापने[5] भगवत

1. S,B,N इति श्लोकेन च
2. B,N परमेश्वरस्वरूपं
3. B अपूर्वावभासना-
4. B,N विकल्पनाज्ञाना-
5. B - - प्रतिष्ठा भगवत एव

एव स्वातन्त्र्यमिति विश्वकर्तृत्वमुक्तम् । अन्ये तु अपोहनम् 'अनेन अकृतेन[1] इदं भवति' इति व्यतिरेकबुद्धिः । 'वेदान्तं करोति' इत्यात्मसाद्भावेन[2] । एवं [3] 'वेदम्' ।। १५ ।।

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।। १६ ।।**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।। १७ ।।**
**यस्मात् क्षरमतीतोऽहमतीतोऽक्षरमेव च (?) ।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ।। १८ ।।**

द्वावित्यादि पुरुषोत्तम इत्यन्तम् । 'द्वाविमौ पुरुषौ' इति ग्रन्थेनेदमुच्यते –लोके तावदप्रबुद्धस्वभावोऽपि सर्वः पृथिव्यादिभूतारब्धशरीरम् आत्मानं चेतनं क्षररूपं जानाति इति लोकस्य मूढत्वात् द्वैतधीर्न निवर्तते । अहं तु सकलानुग्राही द्वैतग्रन्थि विभिद्य सकललोकव्यापकतया वेद्य इति । क्षरमतीतः, भूतानां जडत्वात् । अक्षरमतीतः, आत्मनोऽप्रबुद्धत्वे सर्वव्यापकत्वखण्डनात् । पुरुषोत्तमो लोके वेदेऽपि 'सः उत्तमः पुरुषः' इत्यादिभिर्वाक्यैः स एव परमात्मा अद्वयः एवमुच्यते ।। १६-१८ ।।

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।**
**स सर्वविद्भजति मां सर्वभावेन भारत ।। १९ ।।**

---

1. S,B,N अन्येनाकृतेनेदं
2. B,N सद्भावेन
3. N एतं

यो मामिति । एवं जानानः सर्वमयं मामेव ब्रह्मतत्त्वमुपासीनः सर्वं मन्मयत्वेन विदन् सर्वेण भावेन मूर्तिक्रियाज्ञानात्मकेन मामेव भजते; यत् पश्यति तत् भगवन्मूर्तितयेत्यादि । तथा च मयैव शिवशक्त्यविनाभावस्तोत्रे—

तव च [1]काचन न स्तुतिरम्बिके
सकलशब्दमयी किल ते तनुः ।
निखिलमूर्तिषु मे भवदन्वयो
मनसिजासु [2]बहिष्प्रसरासु च ॥

इति विचिन्त्य शिवे शमिताशिवे
जगति जातमयत्नवशादिदम् ।
स्तुतिजपार्चनचिन्तनवर्जिता
न खलु काचन [3]कालकलापि मे ॥ इति ॥१९॥

**इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।**
**एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २०॥**

**॥ इति श्रीमद्भगवद्गीतायां पञ्चदशोऽध्यायः ॥**

इतीति । गुह्यतमं, सर्वाद्वयप्रतिपादकत्वात् । एतदेव बुद्ध्वा बुद्धिमत्त्वं, न तु व्यवहारबुद्ध्या । एतेन च ज्ञातेनैव कृतकृत्यता, न तु कृतेनापि [4]शत्रुविजयार्थाहरणस्त्र्युपभोगादिना। चकारः अद्भुतद्योतकः । [5]कृतेन हि कृतकृत्यता दृष्टा,

1. N का किल
2. B,N बहि प्रसरासु
3. B,N कालकलास्ति
4. B omits शत्रु
5. N एतेन

एतेन तु ज्ञातेनैवेति[1] चित्रम् । इतिशब्देन शास्त्रस्य समाप्तिः सूचिता, वक्तव्यस्य परिपूर्णतया समाप्तत्वात् । तथा हि— षोडशाध्यायेन शिष्यस्य अर्जुनस्य केवलं योग्यता प्रतिपाद्यते । न तु उपदिश्यते किञ्चित् । 'दैवी ह्येवंविधा संपत्, आसुरी चाविद्यामयी एतादृशी[2] संपत्; त्वं च विद्यामयीं दैवीं संपदमभिप्राप्तः' इत्येतावति हि तात्पर्यम् । यद्वक्ष्यति 'मा शुचः संपदं दैवीम्' इति । अत एव पूर्वं विद्याविद्यासंघट्टनिरूपणावसरे[3] 'देवासुरसंग्रामच्छलेन विद्याविद्ययोः संघर्षः' इति सूचितम् । एवं च शिष्यस्वरूपे प्राधान्येन निरूप्यमाणे प्रसंगतः अन्यदप्युक्तम्, इत्यध्यायद्वयं भविष्यति । उपदेशस्त्वित एव परिसमाप्तः । सर्वभावेन हि परमेश्वरभजनम् आवेशरूपं प्राप्यम्[4] । तदर्थं चान्यत् सर्वमित्युक्तं प्राक् । सर्वमाहेश्वरस्वरूपावेश एव हि परमं शिवम् इति ।। २० ।।

।। शिवम् ।।

अत्र संग्रहश्लोकः—

[5]हत्वा द्वैतमहामोहं कृत्वा ब्रह्ममयीं चितिम् ।
लौकिके व्यवहारेऽपि मुनिर्नित्यं समाविशेत् ।।

।। इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे पञ्चदशोऽध्यायः ।।

---

1. B,N ज्ञानेनैवेति
2. S,B तादृशी
3. B संबद्धनिरूपण -; N संघध्व(षं)-
4. B प्राप्तम्
5. K हृत्वा

## ।। श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ।।

श्लो. १-२ (व्या) **यथा वृक्षस्ये**त्यादि । एतेनेदं सूचितमिव - 'यस्तं वेद स वेदवित्' इत्यत्र यत्तदोर्व्यत्ययेन 'यो वेदवित् स तं वेद' इत्यन्वयः, तथा वेदेन वेत्तीति वेदवित् इति विग्रहार्थश्चाभिप्रेत आचार्येणेति ।।

श्लो. ४ (मू) **प्रपद्येत्** इति रामकण्ठीयः पाठः ।।

श्लो. ३-५ (व्या) **दण्डी प्रैषानुब्रूयात्** इति । प्रसिद्धं विधिस्वरूपं तु 'दण्डी प्रैषानन्वाह' इति ।।

श्लो. ६ (व्या) **करणोपकारकत्वा**दिति । करणानाम् इन्द्रियाणां स्वस्वकार्यकरणे शक्त्यालोकादिप्रदानेन उपकारकत्वात् इति; करणानि इन्द्रियादीनि उपकारकाणि येषाम् अर्थात् स्वसंवेदने, तेषां भावः तस्मादिति विग्रहाश्रयणेन इन्द्रियजन्यज्ञानविषयत्वादिति वा अर्थः ।।

श्लो. १२-१४ (व्या) **यच्चाग्नौ** – यत् तेजः वर्तते अग्नौ आश्रयाशे पार्थिवं काष्ठादिकमाश्रित्य प्रकाशमाने । **इत्यनेन** - इत्यनेन श्लोकेन **प्राणापानसमायुक्त** इति वाक्यघटितेन । **बोधावकाशरूपतया** - बोधात्मको योऽवकाशः तत् स्वरूपतया । दीप्त्यर्थकात् काशृधातोरवपूर्वकान्निष्पन्नस्य अवकाशपदस्यार्थः अवबोध इति; नभोवाचकाकाशपदस्यापि आ समन्तात् काशयति प्रकाशयति सर्वान् पदार्थान् इति व्युत्पत्तेश्चेति बोध्यम् ।।

श्लो. १५ (व्या) **मत्त** इति मूलस्याभिप्रायमाह **तत एवे**ति - प्रत्यगात्मनः अहंविमर्शत इत्यर्थः ।

**तत्राहमित्यादि।** अत्रेदं तत्त्वम् - मूलस्थैः **ज्ञानापोहनस्मृति**शब्दैः क्रमशः (१) 'तदैक्षत बहु स्यां प्रजायेय' (छा. उ. VI, ii, 3), 'सोऽकामयत। बहुस्यां प्रजायेयेति। स तपोऽतप्यत। स तपस्तप्त्वा। इदं सर्वमसृजत।' 'विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्' (तै. उ. II, 6) इत्यादिश्रुत्युक्तरीत्या अहंविमर्शस्याखण्डितस्वातन्त्र्यस्य सर्वात्मभवनज्ञानरूपा अपरिमिता सृष्टिः; (२) तथा बद्धात्मनां पशूनां खण्डितस्वातन्त्र्याणाम् 'अहमेव चेतनः, अयं घटस्त्वचेतन एव' इति शब्दज्ञानमात्रानुपातिवस्तुशून्यप्राया खण्डिता सृष्टिः; (३) एवमेतेषामेव बद्धानां गुर्वागमाद्यनुग्रहेण उद्बुद्धपूर्ववासनानाम् 'आत्मैवेदं सर्वम्' इति प्रत्यभिज्ञा च परामृश्यन्ते इत्याचार्यहृदयमिव।

**वेदवेदान्तकर्तृत्वेन** तथा उत्तरत्र **एवं वेदम्** इति च। आभ्यामेवं सूचितमिव भवति—प्रकृतगीताश्लोकतृतीयपादं 'वेदान्तकृद्वेदकृदेव चाहम्' इत्याचार्यः पपाठेति। वेदवेदान्तशब्दाभ्यां कर्मज्ञानकाण्डयोः परामर्शः।

अत्रोच्यते – 'जन्माद्यस्य यतः' (ब्र. सू. I, i, 2) इति सूत्रेणैव बादरायणेनाचार्येण ब्रह्मणि जगज्जन्मादिकारणत्वस्य निर्धारितत्वात्, जगदन्तर्गतानाम् ऋग्वेदादीनां शास्त्राणां कारणत्वस्य पुनरपि ब्रह्मणि प्रतिपादनपरं 'शास्त्रयोनित्वात्' इति समनन्तरं सूत्रं पुनरुक्तप्रायमेवेति ये मन्यन्ते तान् उक्तसूत्रद्वयसमानयोगक्षेमे प्रकृते गीतापद्ये उपस्थितान् कृत्वा कटाक्षयतीवाचार्यः **वेदवेदान्तकर्तृत्वेने**त्यादिविलेखनेनेति भाति।

अयमाशयः– यद्यपि शास्त्रं जगदन्तर्गतम् । तथापि तादृश-जगतोऽपि प्रवृत्तेर्निवृत्तेश्च निदानभूते प्रवृत्तिधर्मतत्त्वज्ञाने इति तदुपदेष्टृवेदवेदान्तकर्तृत्वमपि लोकानुग्रहाय पृथक्त्वेन ईश्वरे अवश्यं प्रदर्शनीयमिति ।

**तदुन्मूलनेनेति** । तदुन्मूलनपूर्वकमित्यर्थः । यदि तदुन्मूलने इति पाठः स्यात् स साधीयान् ।।

श्लो. १६-१८ (व्या) **अप्रबुद्धे**त्यादि । अप्रबुद्धस्वभावः सर्वोऽपीत्यन्वयः ।

**भूतानां जडत्वादि**ति । भुतानां पृथिव्यादीनामविभावितचैतन्यत्वादित्यर्थः ।

**अक्षरमतीत** इति । इदमाचार्यवचनमेवं सूचयतीव– यस्मात् क्षरमतीत इति पद्ये द्वितीयपादम् 'अतीतोऽक्षरमेव च' इति, तत्समानमन्यद्वा किंचित् पपाठ आचार्य इति ।

अत्र प्रकृतं गीतापद्यत्रयम् अप्रबुद्धतादशायां यथा ईश्वर-तत्त्वं लोकवेदप्रसिद्धं तथा अनुवदतीत्याचार्याभिप्राय इति भाति ।।

श्लो. १९ (व्या) खण्डितात्मभावस्य संमोहरूपत्वात् **असंमूढ** इति मूलस्याभिप्रायमाह - **सर्वमयं मामेव** इत्यादिना । **सर्वविदि**त्यस्य व्याख्या **सर्वं मन्मयत्वेन विदन्** इति । यः सर्व-मयत्वेनात्मानं जानाति, उपास्ते, स तुल्यवित्तिवेद्यतया सर्वमात्मत्वेन वेत्ति इति तात्पर्यम् ।

**सर्वभावेने**ति मूलेन कायिकैन्द्रियिकमानसव्यापारा अभिप्रेता इति दर्शयति - **मूर्त्तिक्रियाज्ञानात्म**केनेति ।

**तव चे**त्यादि । हे **अम्बिके**! **नः** अस्मदीया **तव** विषयिणी **स्तुतिः काचन,** अपूर्वा असाधारणी इत्यर्थः । यद्वा**, नः** अस्मदीया **का च,** का वा क्रिया **तव** विषयिणी **स्तुतिः न** ? इति प्रश्नो वा । अस्मदीयाः सर्वेऽपि व्यापाराः तव स्तुतिरूपा एवेति निश्चयः । तदेवोपपादयति - **सकलशब्दमयी** इत्यादिना ।

**इति विचिन्त्ये**ति । अत्र विचिन्तनस्तुत्यादिकर्मभ्यामुन्नीतो यः कर्ता अस्मच्छब्दार्थः स समान इति उपपन्नं विचिन्त्येति । तथा च **विचिन्त्य** स्थितस्य **मे** मम स्तुत्यादिवर्जिता **कालस्य कलापि काचन न खलु** नैवेत्यन्वयार्थः ।।

।। इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां पञ्चदशोऽध्यायः ।।

# षोडशोऽध्यायः

'एतद्बुद्ध्वा' इत्युक्तम्। बोधश्च नाम [1]श्रुतिमयज्ञानानन्तरम् 'इदमित्थम्' इत्येवंभूतयुक्तिचिन्ताभावनामयज्ञानोदयेन[2] विचारविमर्शपरमर्शादिरूपेण विजातीयन्यक्कारविरहिततद्भावनामयस्वभ्यस्ताकारविज्ञानलाभे सति भवति। यद्वक्ष्यते[3]— 'विमृश्यैतदशेषेण यथेच्छसि तथा कुरु' (XVIII, 63) इति। तत्र श्रुतिमये ज्ञाने गुरुशास्त्रे एव प्राधान्येन प्रभवतः। युक्तिचिन्ताभावनामये तु विमर्शक्षमता असाधारणा शिष्यगुणसंपत्[4] प्रधानभूता। अतः 'अर्जुनस्यास्त्येवासौ' इत्यभिप्रायेण वक्ष्यमाणं 'विमृश्यैतत्' इति वाक्यं सविषयं कर्तुं परिकरबन्धयोजनाभिप्रायेण आह भगवान् गुरुः 'अभयम्' इत्यादि।

आसुरभागसन्निविष्टा तामसी किल अविद्या। सा प्रवृद्धया दिव्यांशग्राहिण्या विद्यया बाध्यते[5] इति वस्तुस्वभाव एषः। त्वं च विद्यात्मानं दिव्यमंशं सात्त्विकमभिप्रपन्नः; तस्मादान्तरीं मोहलक्षणामविद्यां विहाय [6]बाह्याविद्यात्मशत्रुहननलक्षणं शास्त्रीयव्यापारम् अनुतिष्ठ इत्यध्यायारम्भः।

---

1. S श्रुत-
2. S,B,N चिन्तामयज्ञानोदयेन
3. S तद्वक्ष्यते; N तद्वक्ष्यति
4. B – रणशिष्य-
5. B प्रवृद्धाया - - -विद्याया बध्यते
6. S बाह्यविद्या-

तथाहि—

**श्रीभगवानुवाच—**

**अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।। १ ।।**

**अहिंसा सत्यमक्रोधस्त्यागोऽसक्तिरपैशुनम् ।**
**दया भूतेष्वलौल्यं च मार्दवं ह्रीरचापलम् ।। २ ।।**

**तेजः क्षमा धृतिस्तुष्टिरद्रोहो नातिमानिता ।**
**भवन्ति संपदं दैवीमभिजातस्य भारत ।। ३ ।।**

**दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ।। ४ ।।**

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ।। ५ ।।**

अभयमित्यादि पाण्डवेत्यन्तम् । दिव्यांशस्य इमानि चिह्नानि तानि स्फुटमेवाभिलक्ष्यन्ते[1]। दमः[2] इन्द्रियजयः । चापलं पूर्वापरमविमृश्य यत् करणम्, तदभावः अचापलम् । तेजः आत्मनि उत्साहग्रहणेन मितत्वापाकरणम् । दैवी संपदेषा । सा च तव विमोक्षाय, कामनापरिहारात् । अतस्त्वं शोकं मा प्रापः— यथा 'भ्रात्रादीन् हत्वा सुखं कथमश्नुवीय' इति । शिष्टं स्पष्टम् ।। १-५ ।।

---

1. S,B स्फुटमेवोपलक्ष्यन्ते
2. S omits दमः

**द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।**
**दैवो विस्तरतः प्रोक्त आसुरं पार्थ मे शृणु ।। ६ ।।**

द्वाविति । एषा दैवी संपदुक्ता 'अभयम्' इत्यादिना ।।६।।

आसुरीमाह—

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ।। ७ ।।**

प्रवृत्तिमिति । प्रवृत्तिः– कुत इदमुत्पन्नमिति । निवृत्तिः क्व प्रलीयते इति ।। ७ ।।

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतमकिंचित्कमहेतुकम् ।। ८ ।।

असत्यमिति । न किञ्चित् दृष्टादन्यत् कार्यं विद्यते यत्रेति अकिञ्चित्कम् ।। ८ ।।

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः ।। ९ ।।**

**काममाश्रित्य दुष्पूरं दम्भलोभमदान्विताः ।**
**असद्ग्रहाश्रिताः क्रूराः प्रचरन्त्यशुचिव्रताः ।। १० ।।**

**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।**
**कामोपभोगपरमा एतावदिति निश्चिताः ।। ११ ।।**

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।**
**ईहन्ते कामभोगार्थानन्यायेनार्थसंचयान् ।। १२ ।।**

एतामित्यादि अर्थसंचयानित्यन्तम् । चिन्ता तेषां प्रलयान्ता अविरतं(ता) संसृतिप्रलयाव्युपरमात् । एतावदिति-कामोपभोग एव परं(परमं) कृत्यम्[एषाम्]; तन्नाशाच्च परं क्रोधः । अत एवाह 'कामक्रोधपरायणाः' इति ।। ९-१२।।

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ।। १३ ।।
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।। १४ ।।
आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ।। १५ ।।
अनेकचित्ता विभ्रान्ता मोहस्यैव वशं गताः ।
प्रसक्ताः कामभोगेषु पतन्ति निरयेऽशुचौ ।। १६ ।।

इहमद्येत्यादि अशुचौ इत्यन्तम् । अनेकचित्ता[1] इति–निश्चयाभावात् । अशुचौ निरये, अवीच्यादौ, जन्ममरण-सन्ताने च ।। १३-१६ ।।

आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ।। १७ ।।
अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ।। १८ ।।
तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ।। १९ ।।

---

1. A अनेकचिन्ताः; N अनेकचित्तविभ्रान्ताः

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

आत्मसंभाविता इत्यादि गतिमित्यन्तम् । यज्ञैर्यजन्ते नाम, निष्फलमित्यर्थः । क्रोधेन हि सर्वं नश्यतीत्यर्थः । यद्वा नामयज्ञैः, संज्ञामात्रेणैव[1] ये यज्ञाः तैः[2] । अथवा - नामार्थं प्रसिद्ध्यर्थं ये यज्ञाः[3]—येन[4] "यज्ञयाजी अयम्' इति व्यपदेशो जायते – ते दम्भपूर्वका एव, न तु फलन्ति । क्रोधादिरूषितत्वादेव लोकान् द्विषन्तो मामेव द्विषन्ति । अहं वासुदेवो हि सर्वावासः । आत्मनि च द्वेषवन्तः आत्मनो[5] ह्यहितं निरयपातहेतुम् आचरन्ति[6] । तांश्चाहम् आसुरीष्वेव योनिषु क्षिपामि ॥ १७-२० ॥

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥२१॥

एतैर्वियुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

त्रिविधमिति । एतैरिति । यतः कामादिकं [7]त्रयं नरकस्य द्वारं, तस्मात् एतत् त्यजेत् ॥ २१-२२ ॥

---

1. S,B omit एव
2. S,B omit तैः
3. B omits ये यज्ञाः
4. S omits येन
5. B आत्मने
6. S उपाचरन्ति
7. N त्रितयम्

न चैतत् पुरुषवचनमित्यनादरणीयम्, अपि तु अनादि-शास्त्रमत्र प्रमाणम् इत्युच्यते—

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ।। २३ ।।**

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ।। २४ ।।**

**।। इति श्रीमद्भगवद्गीतायां षोडशोऽध्यायः ।।**

यः शास्त्रविधिमिति । तस्मादिति । शास्त्रविधिं त्यजत स्वमनीषयैव कार्याकार्यविचारं कुर्वतः प्रत्युत नरकपातः । तस्मात् आत्मबुद्ध्या[1] कार्याकार्यव्यवस्थां मा कार्षीः इति तात्पर्यम् [इति] ।। २३-२४ ।।

।। शिवम् ।।

अत्र संग्रहश्लोकः—

अबोधे स्वात्मबुद्ध्यैव कार्यं नैव विचारयेत् ।
किन्तु शास्त्रोक्तविधिना, शास्त्रं बोधविवर्धनम् ।।

।। इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपाद-विरचिते श्रीमद्भगवद्गीतार्थसंग्रहे षोडशोऽध्यायः ।।

---

1. S,B,N add शास्त्रमननुसृत्य after आत्मबुद्ध्या

## ॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. १-५ (अ) **इत्येवंभूतेत्यादि**। इत्येवंभूताः युक्तिश्च, चिन्ता च भावना च याः, तन्मयज्ञानानामुदयेन इति विग्रहः। युक्त्यादयस्तिस्रश्च यथाक्रमं विचारविमर्शपरामर्शरूपा इति बोध्यम्। तथा च युक्तिचिन्ताभावनानां विचारविमर्शपरामर्शरूपाणाम् उदयेनेति प्रघट्टार्थः। अथ वा रूपेणेति तृतीयाया अभेदोऽर्थः। स च पूर्वतनसमस्तपदघटकचिन्तादिपदार्थेष्वन्वेति। एवं च विचारादित्रयरूपा या युक्त्यादयस्तिस्रः तासामुदयेनेत्यर्थः। यद्वा उदयः उन्नतिः। 'उदयः पर्वतोन्नत्योः' इति हैमात्। एवं च विचारविमर्शपरामर्शरूपयुक्तिचिन्ताभावनामयज्ञानानामुदयेन उन्नत्या इत्यर्थः। तृतीयार्थहेतुत्वस्य विजातीयन्यक्कारविरहितेति व्यवहितेन संबन्धः।

**विजातीयेत्यादि**। विजातीया या द्वैतभावना तत्कृतेन न्यक्कारेण तिरस्कारेण विरहिता शून्या, तथा च द्वैतज्ञानानास्कन्दिता, या तस्य श्रुत्यर्थभूतस्य अद्वैततत्त्वस्य भावना तन्मयस्य तत्प्राचुर्यस्य यत् सु सम्यक् अभ्यस्तम् आम्रेडनं पौनःपुन्यं तदाकारस्य तत्स्वरूपस्य विज्ञानस्य विमर्शस्य लाभे सतीत्यर्थः।

**विमर्शक्षमता** - विचारकरणे शक्तिमत्ता।

**वस्तुस्वभाव इति**। पूर्वतनाप्यविद्या पश्चात्तन्या विद्यया बाध्यते। कुतः? विद्यायाः वस्तुस्वभावत्वात् वस्तुतन्त्रत्वात् वस्तुविषयत्वेन तदनुगृहीतत्वात्। अविद्यायाश्च अवस्तुविषयत्वात् इति भावः॥

(व्या) **अश्नुवीयेति** । अशू व्याप्तौ इति स्वादेर्धातो-र्विधिलिङि उत्तमपुरुषैकवचने रूपम् ।।

श्लो. ९-१२ (व्या) **संसृतिप्रलयाव्युपरमात्** इति । अत्र 'यदि प्रलयः कश्चिदभविष्यत् संसृत्या अननुयातः, तदा खल्व-भविष्यत् चिन्ताया अन्तः आत्यन्तिकोच्छेदः; तादृशप्रलयो नास्त्येवेत्यविरतैवैषां चिन्ता' इति ध्वनिः ।।

श्लो. १३-१६ (व्या) **निरये अवीच्यादौ जन्ममरणसं-ताने चेति** । एति सुखमनेनेति अयः शुभावहो विधिः । निर्गतः अयादिति निरयः अवीच्यादिनरकवाचकः । एति सुखं दुःखं च अनेनेति अयः शुभाशुभात्मकं कर्म; निर्वृत्तः तस्मात् इति निरयः जन्ममरणसंतानवाचकोऽपि इति बोध्यम् । अथवा निरये इत्यस्यार्थः अवीच्यादावित्यनेन, अशुचावित्यस्यार्थो जन्ममरणसंताने इत्यनेन च दर्शित आचार्येणेति मन्तव्यम् । अन्यथा अशुचावित्यस्य व्यर्थविशेषणत्वापत्तेः, शुचिनिर-यस्याप्रसिद्धेः ।।

श्लो. १७-२० (व्या) **यज्ञैरित्यादि जायते** इत्यन्तम् । प्रथमव्याख्याने नामेति भिन्नं पदमव्ययं कुत्सनार्थकम् । द्वि-तीयपक्षे नाम्ना नाममात्रेण ये यज्ञास्तैरिति विग्रहः । तृतीये च नामफलका यज्ञाः नामयज्ञाः तैरिति शाकपार्थिवादित्वात् समासः ।।

संग्रहश्लोके — **अबोधे** इति सतिसप्तमी । बोधस्य तत्त्वज्ञानस्यानुदयावस्थायामित्यर्थः । यद्वा अबोधे बोधस्या-विषये पुरुषबुद्धिपथमतिक्रम्य स्थिते धर्मादौ विषये इति ।।

।। इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां षोडशोऽध्यायः ।।

# सप्तदशोऽध्यायः

**अर्जुन उवाच—**

**ये शास्त्रविधिमुत्सृज्य वर्तन्ते श्रद्धयान्विताः ।**
**तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥**

ये शास्त्रेति । शास्त्रविधिमनालंब्य ये व्यवहारमाचरन्ति [श्रद्धया], तेषां का गतिरिति प्रश्नः ॥ १ ॥

तदत्रोत्तरं श्रद्धानुसारेण दीयते श्रीभगवता[1]—

**श्रीभगवानुवाच—**

**त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।**
**सात्त्विकी राजसी चैव तामसी चेति ताः शृणु ॥ २ ॥**

त्रिविधेति । तत्र चायमाशयः— शास्त्रं नाम किल पक्षपातारूषितबुद्धिपूर्वकत्वविहीनम्,[2] तथा परामर्शदार्ढ्यरूपं बोधस्वातन्त्र्यादेव[3] दृढं परामृष्टं तथा[4] फलादिस्वभावं, शुद्धविमर्शनिष्यन्दवाक्तत्त्वपरमार्थपरब्रह्मस्वभावम्[5], स्वतन्त्रप्रसरतया आन्तरात् बोधस्वभावात् बहिःप्रसरपर्यन्तं, [6]तच्च सुसूक्ष्मप्रणवादिरूपात्[7] व्यवहारप्रसिद्धप्रवा[8]दपरंपरापर्यन्तम् । यदाह—

---

1. B omits श्रीभगवता
2. B, N पक्षपातादूषित-
3. B, N, K - रूपबोध-
4. B, N, K दृढपरामृष्ट (B,N श्य) तथा
5. B, N omit परमार्थ-; S omits the succeeding पर-
6, S, K, omit तच्च; B Substitutes सा च
7. B, N -प्रधानादिरूपव्यव-
8. B, N—प्रवाह—

'तद्विदां च स्मृतिशीले' इति। (गौतमधर्मसूत्रम्. I, 2)

तच्च स्वत एव हिताहितोपदेशाय कार्याकार्यविवेचकम्। यस्य स्वभावत एव सत्त्वातिरेकसुकुमारं हृदयं, तेनाचरितं शास्त्रितमेव। अन्यस्तु रजस्तमःकलुषीकृतः शास्त्रोक्तमप्याचरन् न आचरति, शास्त्रार्थस्य कार्त्स्न्येन अननुष्ठानात्। शास्त्रं हि सत्त्ववतामेव फलवदिति शास्त्रमेवाह—

यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम्।
विद्या तपश्च शीलं च स तीर्थफलमश्नुते॥ इति (*MB Aranya,* Ch. 80, v. 30)

नान्यः, असंयतत्वात्। तस्मात् शास्त्रार्थः परित्यक्तकामक्रोधमोहेषु सफल इति तात्पर्यम् अस्य अध्यायस्य। तदेवैतत् प्रताय्यते, स्पष्टार्थत्वाच्च न विव्रियते। किं तु[1] केवलं पाठविप्रतिपत्तिनिवारणायैव लिख्यते॥ २॥

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥ ३॥**

सत्त्वेति। सत्त्वानुरूपा इत्यत्र सत्त्वशब्दः स्वभावपर्यायः। अयं पुरुषः आत्मा श्रद्धया अन्यव्यापारोपरि वर्तिन्या अवश्यं संबद्धः; स च तन्मय एव बोद्धव्यः॥ ३॥

**यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः।**
**भूतप्रेतपिशाचांश्च यजन्ते तामसा जनाः॥ ४॥**

1. S omits किंतु

अशास्त्रविहितं घोरं तपस्तप्यन्ति ये जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥
कर्शयन्तः शरीरस्थं भूतग्राममचेतनम् ।
मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥

यजन्त इत्यादि आसुरनिश्चयानित्यन्तम् । अचेतनम् अविवेकित्वात् । मां च कर्शयन्तः शास्त्रार्थाननुष्ठानात् । अत एव ते स्वबुद्धिविरचितां[1] तपश्चर्यां कुर्वणाः प्रत्युत तामसाः ॥ ४-६ ॥

आहारोऽपि सत्त्वादिभेदात् त्रिधा श्रद्धावत्[2]; तथा यज्ञ-तपोदानानि । तदुच्यते—

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥

आहार इत्यादि तामसप्रियम् इत्यन्तम् । याता यामाः यस्य ॥ ७-१० ॥

---

1. N स्वबुद्धिविचारिताम्
2. S omits श्रद्धावत्

अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमित्येव मनः समाधाय स सात्त्विकः ॥ ११ ॥

अभिसंधाय तु फलं दम्भार्थमपि चैव यः ।
इज्यते विद्धि तं यज्ञं राजसं चलमध्रुवम् ॥ १२ ॥

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

अफलेत्यादि परिचक्षते इत्यन्तम् । मनः समाधाय निश्चयेनानुसंधाय । दम्भार्थमपीति– दंभः लोको[1] मामेवंविधं जानीयादिति । विधिहीनमिति– शास्त्रोक्तक्रियाविहीनम्; तदेवासृष्टान्नादिभिर्विशेषणैर्वितन्यते ॥ ११-१३ ॥

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ १६ ॥

देवेत्यादि मानसमुच्यते इत्यन्तम् । आर्जवम्–ऋजुता । अगोप्यविषया धृष्टता सत्यमिति; अस्यैव स्वरूपनिरूपणं 'प्रियहितम्' इत्यनेन क्रियते । प्रियं च तत्काले; हितं च कालान्तरे । ईदृशं च वाक्यं सत्यमित्युच्यते; न तु यथावृत्तकथन-

1. N लोके

मात्रम्[1] । भावः–आशयः, तस्य सम्यक् शुद्धिः भावसंशुद्धिः[2]॥ १४-१६ ॥

श्रद्धया परयोपेतं तपस्तत् त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

मूढग्रहेणात्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत् तामसमुदाहृतम् ॥ १९ ॥

श्रद्धयेत्यादि तामसमुदाहृतम् इत्यन्तम् । त्रिविधेऽपि तपसि श्रद्धा । सात्त्विकस्य हि तन्मयी एव श्रद्धा । राजसस्य तु रजसि दम्भादावेव श्रद्धा । तमोनिष्ठस्य पुनः परोत्सादनादावेव श्रद्धा । इति त्रिविधमपि तपः श्रद्धयोपेतमिति मुनिराह ॥ १७-१९ ॥

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्राजसमिति स्मृतम् ॥ २१ ॥

अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ २२ ॥

---

1. N यथावद्वृत्त-
2. S,B,N omit भावसंशुद्धिः

दातव्यमित्यादि उदाहृतमित्यन्तम् । दातव्यमिति - दद्यादिति नियोगमात्रं पालनीयमिति दोषाभिसंधानाय[1] । परिक्लिष्टं मितादिदोषात् । दानस्य चासत्करणं तत्संप्रदानाद्यसत्करणात् । एवं लौकिकानां सात्त्विकादित्रिप्रकाराशयानुसारेण क्रिया व्याख्याता ।। २०-२२ ।।

इदानीं ये गुणत्रितयसंकटोत्तीर्णधियः ते क्रियां कथमाचरन्ति इति तादृक्प्रकार उच्यते—

**ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्रह्मणा तेन वेदाश्च यज्ञाश्च विहिताः पुरा ।। २३ ।।**

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ।। २४ ।।**

**तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकांक्षिभिः ।। २५ ।।**

**सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ गीयते ।। २६ ।।**

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते ।। २७ ।।**

ओमित्यादि अभिधीयते इत्यन्तम् । ओं तत् सत् इत्येभिस्त्रिभिः शब्दैर्ब्रह्मणो निर्देशः, संमुखीकरणम् । तत्र ओम् इत्यनेन शास्त्रार्थोऽयमादेहसंबन्धमूरीकार्य इति सूच्यते ।

---

1. S येवानभिसन्धाय, B दोषासन्धाय

तत् इति सर्वनामपदेन सामान्यमात्राभिधायिना विशेषपरामर्शमात्रासमर्थेन फलानभिसंधानं ब्रह्मण्युच्यते; अभिसंधानस्य विशेषपरिग्रहमन्तरेण अभावात् सकलविशेषानुग्राहित्वेऽपि सकलफलसंधाने सर्वकर्तृतायामपि विशिष्टफलायोगात् ।

सत् इत्यमुया श्रुत्या प्रशंसा अभिधीयते । क्रियमाणमपि इदं यज्ञादिकं 'दुष्टम्' इति बुद्धया क्रियमाणं तामसतामेति । विशिष्टफलाभिसंधानेन च क्रियमाणं न च सत्, बन्धाधायकमेवेति । तस्मात् 'कर्तव्यमिदम्' इति मन्वानाः [फलविशेषमनभिसंदधानाः] यज्ञादि कुर्वाणा अपि न बध्यन्ते । अनेनैवाभिप्रायेण आदिपर्वण्युक्तम्—

तपो न कल्कोऽध्ययनं न कल्कः
स्वाभाविको वेदविधिर्न कल्कः ।
प्रसह्य वित्ताहरणं न कल्क-
स्तान्येव भावोपहतानि कल्कः ।।
(*MB*, *Adi*, Ch, 1, verse 210) इति ।

कल्कः, बन्धकः । स्वाभाविक इति–'ब्राह्मणेन निष्कारणं षडङ्गं[1] वेदादि अध्येतव्यम्' इति । प्रसह्य, शास्त्रलोकप्रसिद्धोचितया चेष्टया । भावेन, सत्त्वादिगुणत्रययोगिना चित्तेन उपहतान्येतान्येव[2] बन्धकानि, नान्यथा इति तात्पर्यम् ।

1. B omits षडङ्गम्
2. B,N,K उपहतान्येव

अतो यज्ञादि यावच्छरीरभावितया कार्यमेव । तदर्थे [च] हितं[1] कर्म अर्जनादि ।

यदि वा ओम् इत्यनेन समुपशान्तसमस्तप्रपञ्चम्; तत् इत्यनेनोद्भिद्यमानविश्वतरङ्गपरामर्शमात्रात्मकेच्छास्वातन्त्र्य - स्वभावम्; सत् इत्यनेन इच्छास्वातन्त्र्यभरविजृम्भमाणभेद-कम्, पूर्णत्वेऽपि तावच्चित्रस्वभावतया भवनमिति प्रतिपाद्यते । तथाचोक्तम् 'सद्भावे साधुभावे च' इति । तेन परमं प्रशान्तं[2] रूपं पुरस्कृत्य दित्सा-यियक्षा-तितप्सात्मकेच्छा-तरङ्गसंगतं च मध्येकृत्य दानयज्ञतपःक्रियाकारककलापपरिपूर्णं यच्चरमं वपुः इदमुल्लसितम्, एतत् खलु समं त्रितयमनर्गलस्य स्वाभाविकं रूपम् इति कस्य किं कथं कुतः क्व[3] केन फलं स्यादिति ॥ २३-२७ ॥

इदानीमश्रद्धावतः तामसं कर्म सर्वथा[4] निष्फलं कारक-कलापसंयोजनसमुपजनितप्रयासमात्रफलमेव,[5] इति सर्वथैव[6] अश्रद्धावता न भाव्यमित्युच्यते–

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥**

**॥ इति श्रीमद्भगवद्गीतायां सप्तदशोऽध्यायः ॥**

---

1. N,K विहितम्
2. S परमप्रशान्तरूपं
3. N omits क्व
4. S सर्वथैव
5. N -संयोजनमुपजनित-
6. S सर्वथा

अश्रद्धयेति । असदिति - अप्रशस्तम् । तस्मात् प्रशस्ते कर्मणि यतमानानां सुखेनैव भवति शिवम् इति ॥ २८ ॥

॥ शिवम् ॥

अत्र संग्रहश्लोकः—

स एव कारकावेशः क्रिया सैवाविशेषिणी ।
तथापि विज्ञानवतां मोक्षार्थे पर्यवस्यति ॥

॥ इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपादविरचिते श्रीमद्भगवद्गीतार्थसंग्रहे सप्तदशोऽध्यायः ॥

## ॥ श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ॥

श्लो. १ (व्या) **वर्तन्ते** इति मूलस्य तात्पर्यार्थमाह—**व्यवहारमाचरन्तीति** । रामकण्ठोऽप्याह 'वर्तन्ते, क्रियासु व्यवहरन्ति' इति ॥

श्लो. २ (व्या) **पक्षपातेत्यादि** । पक्षपातेन आ ईषदपि अथवा समन्तात् पूर्णतया वा रूषिता या बुद्धिः तत्पूर्वकत्वविहीनामित्यर्थः ।

**तीर्थफलमिति** । तीर्थम् आगमः शास्त्रम्, तदुपदर्शितफलमित्यर्थः । यद्वा तीर्थं पुण्यतीर्थम्, तत्प्रयोज्यफलमित्यर्थः । 'निपानागमयोस्तीर्थमृषिजुष्टजले' इत्युभयत्राप्यमरः (III, iii, 86) ॥

श्लो. ४-६ (व्या) **अचेतनम् अविवेकित्वादिति** । आचार्यस्याम्नायमाशय इव — मूले षष्ठे पद्ये **भूतग्रामविशेषण**

यत् **अचेतन**मिति, तन्न जडापरपर्यायम् । भूतग्रामे जडत्वस्य लोकप्रसिद्धत्वेनोक्तविशेषणस्यानतिप्रयोजनत्वात्, अनुपदेष्टव्यत्वाच्च । वस्तुतः शिवाद्वैतवादिन आचार्यस्य दृष्टया सर्वस्यापि चराचरात्मकप्रपञ्चस्य चेतनावत्त्वेन वस्तूनां चेतनाचेतनविभागानभ्युपगमात्, विभावितचैतन्यवत्त्वाविभावितचैतन्यवत्त्वाभ्यामेव विभागात् । अतस्तात्पर्यमाह - **अचेतनम् अविवेकित्वादिति ।** भूतग्रामः अचेतन इति लोकप्रसिद्धिः तस्य प्रसिद्धचेतनावत्सु दृश्यमानविवेकज्ञानाभावप्रयुक्ता न तु वस्तुतश्चेतनाभावप्रयुक्तेति भावः । यद्वा भूतग्रामस्याचेतनत्वं लौकिकानां दृष्ट्यैव । कुत? तेषां विवेकज्ञानशून्यत्वादिति ।

शास्त्रार्थं सम्यगज्ञात्वा तपआद्यनुष्ठाने आत्मनः क्लेश एव फलम्, न तु फलविधिनिर्दिष्टमिति तात्पर्येण भगवता **मां कर्शयन्त** इत्युक्तमित्याह — **मां चेत्यादिना** ।।

श्लो. १०(मू) **पूति** इति पूयी दुर्गन्धे इति भ्वादेर्धातोः क्विपि रूपम् ।।

श्लो. ११-१३ (व्या) 'मनः समाधाय तु शीघ्रगामिनम्' (वाल्मीकि. सुन्दर. vii, 5, MLJ Press) इत्यादौ मनः समाधायेत्यस्य मनोऽभिप्रायानुसारमित्यर्थपरत्वदर्शनात् प्रकृतोपयोगं तदर्थमाह – **निश्चयेनानुसंधायेति** । यष्टव्यपदसाहचर्यात्तु मनःपदं निश्चयात्मकबुद्धिपरमिति भावः । निश्चयेनेति तृतीयार्थः अभेदः अनुसंधानेऽन्वेति । तथा च यष्टव्यमिति निश्चयात्मकमनुसंधानं कृत्वेति पर्यवसितार्थः ।।

श्लो. १७-१९ (व्या) **तन्मयी** इति। तपोमयी इति सत्त्वमयी इति वा अर्थः।

श्लो. २०-२२ (व्या) **दोषाभिसंधानायेति**। नियोगापरिपालने यद् दोषाणामभिसन्धानं निश्चयः, अभितः सर्वतः सन्धानं संघट्टनं संबन्धो वा, तं दूरीकर्तुमित्यर्थः। 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' (*PA*, II, ii, 14) इति चतुर्थी। अथवा **दोषानभिसंधायेति** विवक्षितमिव। नियोगस्यापरिपालने दोषान् परिचिन्त्य, दातव्यमिति यद्दीयते इत्यन्वयः। अथवा दोषानभिसन्धायेति उत्तरान्वयि। 'अदाने जना मयि दोषान् ब्रूयुः' इति दोषं विचिन्त्य तत्परिहाराय परिक्लिष्टम् अत्यन्तं क्लिष्टमित्यर्थः॥

श्लो. २३ (मू) **ब्रह्मणा तेनेति** पाठो रामकण्ठीयः समादृतः। तेनेति तच्छब्दार्थः उक्तनिर्देशत्रयम्। तृतीयार्थः करणत्वम्। तस्य ब्रह्मणेति तृतीयार्थकर्तृत्वस्य च विहिता इत्यनेनान्वयः। ओंकारेण वेदादयो विहिता इत्यस्मिन्नर्थे वर्तते श्रुतिः—

'ओमित्येदक्षरम् ----तेनेयं त्रयी विद्या वर्तते (छा.उ. I, i, 1 & 8)

तदुपरि शाङ्करं भाष्यं च—

तेनाक्षरेण प्रकृतेन [ओंकारेण] इयमृग्वेदादिलक्षणा त्रयीविद्या, त्रयीविद्याविहितं कर्मेत्यर्थः ---- वर्तते, प्रवर्तते।

(व्या) **ओमित्यनेन शास्त्रार्थोऽयमादेहसंबन्धमूरीकार्य इति सूच्यत** इति । ओमित्यस्य ऊरीकरणार्थो लोकप्रसिद्धः ।

तद्वा [ओमिति] एतदनुज्ञाक्षरं यद्धि किंचनानुजानाति ओमित्येव तदाह (छा. उ. I, i, 8)

इति श्रुतेश्च । शास्त्रार्थोऽग्निहोत्रादिः आदेहसंबन्धमनुष्ठेयत्वेन

यावज्जीवमग्निहोत्रं जुहोति–

इति श्रुतिचोदित ओंकारोच्चारणपूर्वकमूरीक्रियत इति श्रुतिरेवाह–

ओमिति ब्रह्मा प्रसौति ।
ओमित्यग्निहोत्रमनुजानाति (तै. उ. I, 8)

इति । अधिकन्तु अङ्लभाषानुवादविचारे ।

**तत् इति सर्वनामपदेन ---- ब्रह्मणि उच्यत** इति । ब्रह्म उच्यते इति यावत् । 'ओं तत् सदिति निर्देशो **ब्रह्मण** इति मूलानुरोधात् । यथाहुः–

तदिति सर्वनाम, सर्वं च ब्रह्म, तस्य नाम तत्
इति (गीता II, 16, शाङ्करभाष्यम्)

एवं च **फलानभिसंधानमिति** ब्रह्मविशेषणम् बोध्यम् । फलस्य अनभिसंधानम् अभिसन्धानाभावो यस्मिस्तत् इति बहुव्रीहिः ।

**सकलफल[ाभि]सन्धाने सर्वक्तुतायामपि विशेषफलायोगात्** इति । अत एव––

'सर्वकर्मा सर्वकामः'

इत्यारभ्य

'सर्वमिदमभ्यात्तः अवाकी अनादरः' (छा.उ. III, iv, 2) इति श्रुतिः ब्रह्म प्रतिपादयति । सर्वकर्मकर्तृत्वसर्वकामत्व-हेतुना सर्वमिदं जगदभितः सर्वतः आत्तो व्याप्त आत्मा, अवाप्त-समस्तकामत्वात् ईप्साजिहासाप्रयुक्तविधिनिषेधवाग्ररहितः तथा आदरेण संभ्रमेण रहितश्चेति तदर्थात् । अप्राप्तस्य ईप्सितस्य प्राप्तव्ये, प्राप्तस्य कस्यचित् हातव्ये वा संभवति ईप्साजिहासाप्रयुक्ता वाक् च आदरश्च । आप्तसमस्तकामस्य नित्यतृप्तस्याचलस्येश्वरस्य तौ न कथंचित् संभवत इति भावः ।

> **स्वाभाविक** इति। स्वभावनियत इत्यर्थः । वक्ष्यति च–
> स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् । (XVIII, 48) इति ।

**तस्मात् कर्तव्यमिद**मित्यादि । अनेन तस्मादोमित्या-दिसार्धपद्यत्रयस्य तात्पर्यं संगृह्यते । तत्र च **कर्तव्यमिदमिति मन्वाना** इत्यनेन पूर्वोक्त ओमर्थः, **फलविशेषमनभिसन्दधाना** इत्यनेन पूर्वोपदर्शितः तदिति निर्देशस्यार्थः, **यज्ञादी**त्यनेन सदर्थश्च प्रदर्शितः । 'यज्ञो हि श्रेष्ठतमं कर्म' इति श्रुतेः ।

तत्र **ओमित्यनेने**त्यादिना ग्रन्थेन त्रयाणामपि निर्देशानां प्रकृतानामर्थविशेषयोगो यज्ञदानतपस्सु प्रदर्शितः । परन्तु ओं तत् सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः इति ओमित्या-दीनां ब्रह्मनिर्देशत्वेनैवोपक्रमः कृतः । एतान् ब्रह्मनिर्देशानु-

दाहृत्यैव यज्ञदानतपःक्रियाः क्रियन्ते ब्रह्मवादिभिर्मोक्षकांक्षिभिरित्यपि प्रदर्शितम् । भगवती श्रुतिरपि

'तमेवं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा' (बृ. उ. IV, iv, 22)

इति यज्ञदानतपसां ब्रह्मतत्त्वज्ञानसाधनभावं दर्शयति । एवं च ओमित्यादीनां मुख्यतया वृत्तिः ब्रह्मणि, तत्प्राप्त्यर्थेषु **यज्ञदानतपस्सु** केनापि गुणयोगेनेति पर्यवसितम् । तस्मात् तेषु प्रथमं साधकानां कृते अर्थयोगं दर्शयित्वा इदानीमत्यावश्यकत्वात् ब्रह्मणि ओमित्यादीनामर्थयोगं दर्शयति - **यदि वेत्यादिना ।**

**ओमित्यनेन समुपशान्तसमस्तप्रपञ्चमिति ।** ब्रह्मेति शेषः । तथा च श्रुतिः–

'अव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव' (मा. उ. 12) इति ।

**तदित्यनेन ---- इच्छास्वातन्त्र्यस्वभावमिति ।** ब्रह्मेत्यनुवर्तते ।

'सोऽकामयत । बहुस्यां प्रजायेयेति' (तै.उ. II, 6) इति श्रुतिषु तच्छब्दवाच्यस्य ब्रह्मणः विश्वसृष्टीच्छास्वातन्त्र्यस्वभावप्रतिपादनात् ।

**सदित्यनेनेत्यादि —**

'सदेव सौम्येदमग्र आसीत्' (छा. उ. VI, ii, 1 )

इत्यारभ्य

'तदैक्षत बहुस्यां प्रजायेयेति, तत्तेजोऽसृजत, तत्तेज ऐक्षत' (छा. उ. VI, ii, 3-4)

इत्यादिछान्दोग्यश्रुतौ सच्छब्दवाच्ये ब्रह्मणि स्वेच्छया स्वातन्त्र्येण बहुधा विजृम्भणम्, पूर्णे च तस्मिन् ब्रह्मणि उक्तम्। एवम्

'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशात् वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात् पुरुषः (तै.उ. II, 1)

इति तैत्तिरीयश्रुतौ च विचित्रस्वभावतया भवनमपि प्रतिपाद्यते इति ।

तदेवं ओम् तत् सत् इति निर्देशानां ब्रह्मणि समन्वयं कृत्वा प्रत्यगात्मनि अनर्गले तदतिदिशति-**तेने**त्यादिना **अनर्गलस्य स्वाभाविकं रूपमित्यन्तेन** ग्रन्थेन ।।

।। इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यां सप्तदशोऽध्यायः ।।

# अष्टादशोऽध्यायः

अर्जुन उवाच—

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ।। १ ।।

संन्यासस्येति । पूर्वमुक्तं 'स त्यागी स च बुद्धिमान्' (II, 50) इति । तथा 'स संन्यासी च योगी च न निरग्निः' (VI, 1) इत्यादि । अतस्त्यागिसंन्यासिनोर्द्वयोः श्रवणात् विशेषजिज्ञासोरयं प्रश्नः ।। १ ।।

अत्रोत्तरम्—

श्रीभगवानुवाच—

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ।। २ ।।

काम्यानामिति । काम्यानि—अग्निष्टोमादीनि[1] । सर्वकर्मेति – सर्वेषां नित्यनैमित्तिककर्मणां[2] क्रियमाणत्वेऽपि फलत्यागः त्यागः । अत्र चाध्याये यदवशिष्टं[3] वक्तव्यमस्ति, तत् प्राक्तनैरेव तत्रभवद्भट्टभास्करादिभिः वितत्य विमृष्टमिति किमस्माकं तद्गूढार्थप्रकाशनमात्र[4]प्रतिज्ञानिर्वाहणसाराणां पुनरुक्तप्रदर्शनप्रयासेन ।। २ ।।

---

1. B अग्निष्टोमसत्रादीनि
2. S -नैमित्तिककाम्यकर्मणाम्
3. S,B,N यदवशिष्टमवलग्नं वक्तव्यम्
4. S -प्रत्यभिज्ञानिर्वाहण-

तदत्रैव विशेषनिर्णयाय मतान्युपन्यस्यति—

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ।। ३ ।।**

त्याज्यमिति । दोषवत् हिंसादिमत्त्वात्[1] पापयुक्तम् । 'तत् कर्म[2] त्याज्यम्, न सर्वं शुभफलम् इति केचित् त्यागे विशेषं मन्यन्ते सांख्यगृह्या इव । अन्ये तु [3]मीमांसककञ्चुकानुप्रविष्टाः—

'क्रत्वर्थोऽहि शास्त्रादवगम्यते' (*SB.* IV, i, 2) इति ।

तथा

'तस्माद्या वैदिकी हिंसा - - -' (*SV.* I, i, 2, verse 23)

इत्यादिनयेन इतिकर्तव्यतांशभागिनी हिंसा[4] हिंसैव न भवति । 'न हिंस्यात्' इति सामान्यशास्त्रस्य तत्र बाधनात् श्येनाद्येव तु[5] हिंसा ।

'फलांशे भावनायाश्च प्रत्ययोऽनुविधायकः' (*SV,* I, i, 2, verse 222) इति ।

---

1. S हिंसादित्वात; B,N हिंसाविसत्वात्
2. S,B,N substitutes फलं for कर्म
3. K मीमांसाकंचुक—
4. S,B,N omit हिंसा
5. B श्येन द्येव न तु

अ[तोऽ]न्यान् हिंसादियोगिनोऽपि न त्यजेत् । शास्त्रैकशरण-कार्याकार्यविभागाः पण्डिता इति मन्यन्ते ।। ३ ।।

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ।। ४ ।।

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।। ५ ।।

एतान्यपि च कर्माणि संगं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।। ६ ।।

नियतस्य च संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ।। ७ ।।

दुःखमित्येव यः कर्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ।। ८ ।।

कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।
संगं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ।।९।।

न द्वेष्टयकुशलं कर्म कुशले नानुषज्जति ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ।। १० ।।

न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ।। ११ ।।

निश्चयमित्यादि अभिधीयते इत्यन्तम् । तत्र त्वयं निश्चयः– प्राग्लक्षितगुणस्वरूपवैचित्र्यात् त्यागस्यैव सत्त्वरजस्तमोमय्या चित्तवृत्त्या क्रियमाणस्य तद्विशिष्टस्वभावाव-

भासित[त्वात्] वस्तुस्थित्या त्यागो नाम परब्रह्मविदां[1] सिद्ध्यसिद्ध्यादिषु समतया रागद्वेषपरिहारेण फलप्रेप्साविरहेण[2] कर्मणां निर्वर्त्तनम् । अत एव आह - 'राजसं तामसं च त्यागं कृत्वा न कश्चित्[3] [त्याग]फलसंबन्धः,' इति । सात्त्विकस्य तु त्यागात्(त्यागस्य) शास्त्रार्थपालनात्मकं फलम् । त्यक्तगुणग्रामग्रहस्य पुनर्मुनेः सत्यतः त्यागवाचो युक्तिरुपपत्तिमती ॥ ४-११ ॥

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥१२॥**

अनिष्टमिति । अत्यागिनाम्—फलमयानाम्[4] ॥ १२ ॥

अधुना व्यवहारदशायामपि पञ्चस्वपि कर्महेतुषु स्थितेषु बलादेवामी[5] अविद्यान्धाः पुमांसः स्वात्मन्येव सकलकर्तृभावभारमारोपयन्ति[6] । अतो निजयैव धिया आत्मानं बध्नन्ति, न तु वस्तुस्थित्या अस्य बन्धः इत्युपदिश्यते—

**पञ्चेमानि महाबाहो कारणानि निबोध मे ।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**
**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।**
**विविधा च पृथक् चेष्टा दैवमेवात्र पंचमम् ॥ १४ ॥**

---

1. B, N परमब्रह्म -
2. B फलप्रेक्षा -
3. B न किंचित्
4. S,B,N तन्मयानाम्
5. B बलादमी
6. B आरोपयन्त्येते

**शरीरवाङ्मनोभिर्हि यत्कर्मारभतेऽर्जुन ।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥**

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।**
**हत्वापि स इमल्लोँकान्न हन्ति न निबद्धयते ॥ १७ ॥**

पञ्चेत्यादि न निबद्धयते इत्यन्तम् । कृतः अन्तः, निश्चयः यत्रेति कृतान्तः, सिद्धान्तः । अधिष्ठानं, विषयः । दैवम्, प्रागर्जितं शुभाशुभम् । पञ्चैते अधिष्ठानादयः सामग्रीरूपतां प्राप्ताः सर्वकर्मसु हेतवः ।

अन्ये तु, अधिष्ठीयते अनेन सर्वं कर्म इति बुद्धिगतं रजोलब्धवृत्तिकं धृतिश्रद्धासुखविविदिषाविविदिषारूपपञ्चकपरिणामिकर्मयोगशब्दवाच्यमधिष्ठानं क्वचित् प्रयत्नशब्देन उक्तम् । कर्ता, अनुसन्धाता बुद्धिलक्षणः । करणं मनश्चक्षुरादि, बाह्यमपि च खड्गादि । चेष्टा प्राणापानादिका । दैवशब्देन धर्माधर्मौ; ताभ्यां च बुद्धिगताः सर्वेऽपि भावा उपलक्षिताः [इति] ।

अन्ये तु अधिष्ठानम् ईश्वरं मन्यन्ते ।

अकृतबुद्धित्वात्, अनिश्चितप्रज्ञतया । यः पुनरहंकारवियोगदार्ढ्येन प्रागुक्तयुक्तिशतशोधितेन कर्माणि करोति न स बन्धभाक्[1], कृतबुद्धित्वात् इत्याशयः ॥ १३-१७ ॥

1. B, N न संबन्धभाक्

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ।। १८ ।।**

ज्ञानमिति । कर्मणि चोदना प्रवृत्तीच्छा । तत्समये येषाम् अबोधमात्रनिष्ठत्वात् ज्ञानज्ञेयज्ञातृश्रुतिवाच्यता[1], तेषामेव सम्यग्ग्रहणरूपं यत् फलाभिसंधानेन आत्मीयबुद्धया स्वीकरणम्, 'अहमेतत् भोक्ष्ये, यतो मया कृतम्' इत्येवं रूपम्; तत्समये तथा निर्वर्त्तनावसरे करणकर्मकर्तृशब्दाभिधेयत्वम्, आविष्टत्वात् । अतो योगिनाम् आवेशो नास्तीति तान् प्रति करणादिगिरां प्रसङ्गो नास्ति, अपि तु ज्ञानादिमात्रे[2] एव [इति] तात्पर्यम् ।। १८ ।।

अथैषां षण्णामपि संक्षेपेण [3]गुणभेदात् भेदं दर्शयितुमाह—

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ।। १९ ।।**

ज्ञानमिति । गुणानां संख्यानं निश्चयो यत्र, तत्र सांख्यीयकृतान्ते ज्ञानादित्रिविधमुच्यते यत्, तच्छृणु इति संगतिः । 'ज्ञानम्' इत्यनेन ज्ञाने क्रियायां च यत् करणं तत् द्विविधमुक्तम् । एवं 'कर्म' इति ज्ञेयं कार्यं च; 'कर्ता' इति[4] ज्ञाता कर्ता चेति ।। १९ ।।

---

1. B -वाच्यतया
2. K ज्ञ नमात्र एव
3. B omits गुण—
4. B, N, K omit कर्तेति

तत्र[1] 'सर्वभूतेषु' इत्यादिना श्लोकत्रयेण (श्लो.२०-२२) ज्ञानकरणस्य त्रैरूप्यमुक्तम्। अत एव 'येन' इति तृतीया। इयता च ज्ञानकरणसामान्यस्य[2] स्वरूपमुक्तम्। 'नियतम्' इत्यादिना श्लोकत्रयेण (श्लो. २३-२५) कर्मणो ज्ञेयकार्यरूपस्य द्वैविध्यम्; 'मुक्तसंगः' इत्यादिना श्लोकत्रयेण (श्लो. २६-२८) तु कर्तुर्द्विरूपस्य संक्षेपेण स्वरूपम्; करणविशेषस्य स्वरूपभेद-प्रतिपादनार्थं ['प्रवृत्तिम्' इत्यादिना श्लोकत्रयेण (३०-३२)] बुद्धेस्त्रैविध्यं निरूपितम्[3]। तद्द्वारेण करणान्तराणामपि त्रैविध्यमुपलक्षितम्। करणस्य तु इतिकर्तव्यतापेक्षित्वात् इति-कर्तव्यतायाश्च धृत्यादिपञ्चकरूपत्वेऽपि, श्रद्धायाः पूर्वमुक्तत्वात्, विविदिषाविविदिषयोश्च धृतिसुखाभ्यामाक्षेपात् तयोस्त्रै-विध्यम् 'धृत्या यया' इत्यनेन [श्लोकत्रयेण (३३-३५)] 'सुखं त्विदानीम्' इत्यनेन [श्लोकत्रयेण (३६-३९)] चोक्तम्। तदाह—

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते।**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥२०॥**

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान्।**
**वेत्ति सर्वेषु भूतेषु तद्राजसमिति स्मृतम् ॥ २१ ॥**

**यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहेतुकम्।**
**अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥**

1. S adds शरीरे after तत्र
2. B, N record an alternative reading सामर्थ्यस्य for सामान्यस्य by saying सामर्थ्यस्येत्यन्यादर्शे
3. S —विध्यमुपलक्षितम्

सर्वभूतेषु इत्यादि समुदाहृतमित्यन्तम् । विभक्तषु, देवमनुष्यादितया । पृथक्त्वेन, इह मे प्रीतिः इह मे द्वेषः इत्यादिबुद्धया । अहेतुकम्, कारणमविचार्यैव अभिनिवेशावेशवशात् क्रोधरागादिग्रहणं यत् तत्तामससंज्ञम् ॥ २०-२२ ॥

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत् तत् सात्त्विकमुच्यते ॥ २३ ॥

यत्तु कामेप्सुना कर्म साहंकारेण वा पुनः ।
क्रियते क्लेशबहुलं तद्राजसमिति स्मृतम् ॥ २४ ॥

अनुबन्धं क्षयं हिंसामनवेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ॥ २५ ॥

नियतमित्यादि तामसमुच्यते इत्यन्तम् । नियतम् — कर्तव्यमिति । क्लेशैः अविद्याद्यैः बहुलं[1] व्याप्तम् । मोहात् अभिनिवेशमयात् ॥ २३-२५ ॥

मुक्तसंगोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्धयसिद्धयोर्निर्विकारः कर्त्ता सात्त्विक उच्यते ॥२६॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्त्यते ॥ २७ ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्रश्च कर्ता तामस उच्यते ॥ २८ ॥

---

1. S बहुलैः

मुक्तसङ्ग इत्यादि तामस उच्यते इत्यन्तम् । अहं कर्ता इति न वदन्, तच्छीलः, तद्धर्मा[1], तत्साधुकारी वा यो न[2] भवति इति अनहंवादी इति । अनेन णिनिना व्यवहारमात्र-संवृत्तिवशेन योगिनोऽपि 'अहं करोमि' इति वचो न निषिद्धम् । हर्षशोकान्वितः,सिद्धयसिद्धयोः । निकृतिः नैर्घृण्यम् ॥२६-२८॥

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥**

बुद्धेरिति । बुद्धिः निश्चयः । धृतिः सन्तोषः । सर्वो हि सुकृतं दुष्कृतं वा कृत्वा अन्ते 'अवश्यं कृतं करणीयं, किमन्येन'[3] इति धियं गृह्णाति । अन्यथा क्रियाभ्यो व्युपरमे को हेतुः स्यात्? अतः सर्वस्यैव धृतिरस्तीति तात्पर्यार्थः । पदार्थस्त्व-प्रसिद्धो व्याख्याय(स्य)त एव ॥ २९ ॥

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।**
**बन्धं मोक्षं च या बुद्धिर्वेद सा सात्त्विकी मता ॥३०॥**
**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।**
**अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१ ॥**
**अधर्मं धर्ममिति या बुद्धयते तमसान्विता ।**
**सर्वार्थान् विपरीतांश्च बुद्धिः सा तामसी मता ॥ ३२॥**

प्रवृत्तिमित्यादि तामसी मतेत्यन्तम् । अयथावत् - असम्यक् ॥ ३०-३२ ॥

---

1. N तद्धर्मः
2. S न यो भवति; B,N,K omit न
3. S N किमनेन

**धृत्या यया धारयते मनः प्राणेन्द्रियक्रियाः ।**
**योगेनाव्यभिचारिण्या धृतिः सा सात्त्विकी मता ।।३३।।**
**यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।**
**प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ।। ३४ ।।**
**यया स्वप्नं भयं शोकं विषादं मदमेव च ।**
**न विमुञ्चति दुर्मेधा धृतिः सा तामसी मता ।। ३५ ।।**

धृत्येत्यादि तामसी मतेत्यन्तम् । मनःप्राणेन्द्रियक्रियाः योगेन धारयति; यथा 'किं ममोपभोगादिभिः? सर्वथैवात्मारामो भूयासम्' इति मन्वानः । प्रसङ्गेनेति— न तथा अभिनिवेशेन । निद्राकलहादिष्वेव यया सन्तोषं बध्नाति तत्परतया, सा तामसी धृतिः ।। ३३-३५ ।।

**सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।**
**अभ्यासाद्रमते यत्र दुःखान्तं च नियच्छति ।। ३६ ।।**
**यत्तदात्वे विषमिव परिणामेऽमृतोपमम् ।**
**तत्सुखं सात्त्विकं विद्यादात्मबुद्धिप्रसादजम् ।। ३७ ।।**
**विषयेन्द्रियसंयोगाद्यत्तदात्वेऽमृतोपमम् ।**
**परिणामे विषमिव तद्राजसमिति स्मृतम् ।। ३८ ।।**
**यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।**
**निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ।। ३९ ।।**

सुखमित्यादि तामसमुदाहृतमित्यन्तम् । तदात्वे, अभ्यासकाले । विषमिव, जन्मशताभ्यस्तविषयसङ्गस्य दुष्परिहारत्वात् । उक्तं च श्रुतौ—

'क्षुरस्य धारा विषमा दुरत्यया' इत्यादि । आत्मप्रसादात् बुद्धिप्रसादो जायते, अन्यस्यापेक्ष्यमाणस्याभावात् । विषयेन्द्रियाणां परस्परसंयोगजं[1] सुखम्, चक्षुष इव रूपसंबन्धात् । निद्रातः आलस्येन प्रमादेन[2] पूर्वं व्याख्यातेन यत् सुखं तत्तामसम् ।। ३६-३९ ।।

**न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।**
**सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ।। ४० ।।**

न तदस्तीति । एवं कर्तृकर्मकरणानां[3] बुद्धिधृत्योः सुखस्य च सत्त्वादिभेदभिन्नानां परस्पराङ्गाङ्गिभावबाध्यबाधकत्वसमुच्चयात् वृत्तिक्रमयौगपद्यादियोगात्[4] अपरिसंख्येयभेदत्वात् विविधफलप्रसवसमर्थत्वम् इति । अनेन कर्मणां प्राक् सूत्रितं गहनत्वं वितत्य सहेतुकं निर्णीतम् । सर्वे चैते देवादिस्थावरान्ताः गुणत्रयसंबन्धं नातिक्रामन्ति । उक्तं हि—

आ ब्रह्मणश्च कीटान्तं[5]
न कश्चित्तत्त्वतः सुखी ।
करोति विकृतीस्तास्ताः
सर्व एव जिजीविषुः[6] ।। इति

तत्त्वतो हि सुखं गुणातिक्रान्तमनसः, नेतरस्येत्याशयः ।।४०।।

---

1. S, B—संप्रयोगजम्
2. S, B, N आलस्येन शठतया प्रमादेन
3. N —कारणानाम्
4. S —पद्यादिभेदात्
5. S,N कीटाच्च
6. S,B,N omit this second half of the verse

एवमियता षण्णां प्रत्येकं त्रिस्वरूपत्वं धृत्यादीनां च प्रतिपादितम् । 'तन्मध्यात् सात्त्विके राशौ वर्तमानो दैवीं संपदं प्राप्त इह ज्ञाने योग्यः, त्वं च तथाविधः' इत्यर्जुनः प्रोत्साहितः ।

अधुना तु इदमुच्यते– यदि तावदनया ज्ञानबुद्ध्या कर्मणि भवान् प्रवर्तते तदा स्वधर्मप्रवृत्त्या विज्ञानपूततया च न कर्मसंबन्धस्तव । अथैतन्नानुमन्यसे, तदवश्यं तव प्रवृत्त्या तावत् भाव्यम्; जातेरेव तथाभावे स्थितत्वात् । यतः सर्वः स्वभावनियतः[1] कुतश्चिद्दोषात् तिरोहिततत्स्वभावः[2] कंचित्कालं भूत्वापि, तत्तिरोधायकविगमे स्वभावं व्यक्त्यापन्नं लभत एव । तथाहि एवंविधो वर्णनां स्वभावः । एवमवश्यंभाविन्यां प्रवृत्तौ ततः फलविभागिता भवेत् । तदाह—

**ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ।। ४१ ।।**

**शमो दमस्तथा शौचं क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ।। ४२ ।।**

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ।। ४३ ।।**

**कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ।**
**पर्युत्थानात्मकं कर्म शूद्रस्यापि स्वभावजम् ।। ४४ ।।**

---

1. S,B,N स्वस्वभावनियतः
2. S,B,N --हिततत्तत्स्वभावः

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ।। ४५ ।।

यतः प्रवृत्तिर्भूतानां येन विश्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।। ४६ ।।

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ।। ४७ ।।

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ।। ४८ ।।

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ।। ४९ ।।

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे ।
समासेन तु कौन्तेय निष्ठा ज्ञानस्य या परा ।। ५० ।।

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ।।५१।।

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ।। ५२ ।।

अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ।। ५३ ।।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न हृष्यति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ।। ५४ ।।

भक्त्या मामभिजानाति योऽहं यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।। ५५ ।।

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।। ५६ ।।

चेतसा सर्वकर्माणि मयि संन्यस्य भारत ।
बुद्धियोगं समाश्रित्य मच्चित्तः सततं भव ।। ५७ ।।

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत् त्वमहंकारं न मोक्ष्यसि विनंक्ष्यसि ।। ५८ ।।

यदहंकारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैव व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ।। ५९ ।।

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ।।६०।।

ब्राह्मणेत्यादि अवशोऽपि तत् इत्यन्तम् । ब्राह्मणादीनां कर्मप्रविभागनिरूपणस्य स्वभावोऽवश्यं नातिक्रामति[1] इति क्षत्रियस्वभावस्य भवतोऽनिच्छतोऽपि प्रकृतिः स्वभावाख्या नियोक्तृताम् अव्यभिचारेण भजते । केवलं तया नियुक्तस्य पुण्यपापसंबन्धः । अतः मदभिहितविज्ञानप्रमाणपुरःसरीकारेण कर्माण्यनुतिष्ठ । तथा सति बन्धो निवर्त्स्यति । इत्यस्यार्थस्य परिकरघटनतात्पर्यं[2] महावाक्यार्थस्य । अवान्तरवाक्यानां स्पष्टा(ष्टोऽ)र्थः ।

समासेन[3] (श्लो. ५०) संक्षेपेण । ज्ञानस्य, प्रागुक्तस्य । "निष्ठां(ष्ठा)" वाग्जालपरिहारेण निश्चितामाह । बुद्ध्या

---

1. S, B, N omit न and read अतिक्रामति
2. S, B, N करबन्धनघटन-
3. S omits समासेन

विशुद्धया इत्यादि सर्वमेतत् व्याख्यातप्रायमिति न पुनरायस्यते[1] ।। ४१-६० ।।

**ईश्वरः सर्वभूतानां हृद्येष वसतेऽर्जुन ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।। ६१ ।।**
**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**मत्प्रसादात् परां सिद्धिं स्थानं प्राप्स्यसि शाश्वतम् ।।६२।।**

ईश्वर इति । तमेवेति । एष ईश्वरः परमात्मा अवश्यं शरणत्वेन ग्राह्यः । तत्र हि अधिष्ठातरि कर्तरि[2] बोद्धरि स्वात्ममये विमृष्टे[3], न कर्माणि स्थितिभाञ्जि भवन्ति । न हि निशिततरनखरकोटिविदारितसमदकरिकरटगलितमुक्ता-फलनिकरपरिकरप्रकाशितप्रतापमहसि[4] सिंहकिशोरके गुहा-मधितिष्ठति चपलमनसो विद्रवणमात्रबलशालिनो [5]हरिण-पोतकाः स्वैरं स्वव्यापारपरिशीलनापटुभावमवलंबन्ते इति ।

'तमेव शरणं गच्छ' इत्युपक्रम्य 'मत्प्रसादात्' इति निर्वाहवाक्यमभिदधत् भगवान् परमात्मानम् ईश्वरं वासुदेवं च एकतया योजयति इति ।। ६१-६२ ।।

**इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ।। ६३ ।।**

---

1. N —रारभ्यते
2. B omits कर्तरि
3. B,N विस्पष्टे
4. B omits -- परिकर --
5. K हिरण -

इति त इति। तदेवेदं (तवेदं?) ज्ञानम् उक्तं गुह्यात्, वेदान्तादपि, गुह्यं, परमाद्वैतप्रकाशनात्। एतच्चाशेषेण[1] विमृश्येति[2] - तात्पर्यमत्र विचार्येत्यर्थः ।। ६३ ।।

तच्च तात्पर्यं यथावसरम् अस्माभिः श्रृङ्गग्राहिकयैव प्रकाशितं यद्यपि; तथापि स्फुटम् अशेषविमर्शनं प्रदर्श्यते। उपादेयतमं ह्यदः। नास्मिन् निरूप्यमाणे श्रूयमाणे वा मतिस्तृप्यति। 'गुह्यतमं यदत्र निश्चितं तज्ज्ञानमिदानीं श्रृणु' इत्याह–

**सर्वगुह्यतमं भूयः श्रृणु मे परमं वचः।**
**इष्टोऽसि मे दृढमतिस्ततो वक्ष्यामि ते हितम् ।। ६४ ।।**

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।। ६५ ।।**

सर्वेति। मन्मना इति। मन्मना भव इत्यादिना शास्त्रे ब्रह्मार्पणे एव सर्वथा प्राधान्यम् इति निश्चितम्; ब्रह्मार्पणकारिणः शास्त्रमिदमर्थवत् इत्युक्तम् ।। ६४-६५ ।।

आह च—

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।। ६६ ।।**

सर्वधर्मानिति। यदिदं युद्धकरणे प्रासङ्गिकबन्धुवधादि, तस्य सर्वस्य 'अहं कर्त्ता' इत्यात्मधर्मतां परित्यज्य; तथा

---

1. S एतच्चाविशेषेण
2. B,N omit विमृश्येति and read संग्रहतात्पर्यम्

'आचार्यादिहननक्रियानिषेधे मम धर्मो[1] भविष्यति' इति मनसा विहाय; मामेवैकं सर्वकर्तारं स्वतन्त्रं[2] शरणं सर्वस्वभावाधिष्ठायकतया व्रज । अत एवाहं सर्वज्ञः सर्वेभ्यः पापेभ्यस्त्वां मोक्षयिष्यामि इति । मा शुचः, किंकर्तव्यतामोहं मा गाः[3] ॥ ६६ ॥

**इदं ते नातपस्काय नाभक्ताय कदाचन ।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

इदमिति । अस्य ज्ञानस्य गोप्यमानत्वं सिद्धिदम्, सर्वजनाविषयत्वात् । तपसा तावत् पापग्रन्थौ विशीर्णे कुशलपरिपाकोन्मुखता भवति, इति पूर्वं तपः; तपसः श्रद्धा,[4] सैव भक्तिः । श्रद्धापि उपजाता कदाचित् न प्ररोहति, सौदामिनीव क्षणदृष्टनष्टत्वात्[5] । ततः तत्प्ररोहे श्रोतुमिच्छा भवति । इयदपि च कस्यचिदनीश्वरेऽवस्तुनि शुष्कसांख्यादिज्ञाने भवति । सेश्वरेऽपि वा कस्यचित् फलार्थितया फलमेव प्रधानीकृत्य भगवन्तं च स्वात्मानं तदुपकरणपात्रीकरणेन न्यक्कृत्य भवेत् । यदुक्तम्—

'पुरुषश्च कर्मार्थत्वात्' (*JS*, III, i, 6 )
'कर्माण्यपि फलार्थत्वात्' (*JS*, III, i, 4 ) इति ।

एवमुभयथापि भगवति असूयैव अनादर इत्यर्थः ॥ ६७ ॥

---

1. B, N ममाधर्मो
2. S omits एकं---स्वतन्त्रम्
3. S,B मा गमः
4. S adds जायते after श्रद्धा
5. N क्षणदृष्टत्वात्

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्ति मयि परां कृत्वा स मामेष्यत्यसंशयः ।। ६८ ।।
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ।। ६९ ।।
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ।। ७० ।।
श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभाल्लँोकान् प्राप्नुयात् पुण्यकर्मणाम्।।७१
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनञ्जय ।। ७२ ।।

य इदमित्यादि धनञ्जयेत्यन्तम् । भक्तिमिति–एतदेव मयि भक्तिकरणं यत् [1]भक्तेष्वेतन्निरूपणम् । अभिधास्यति[2], आभिमुख्येन शास्त्रोक्तप्रक्रियया, धास्यति वितरिष्यति [यः] स मन्मयतामेति इति विधिरेवैष नार्थवादः । एवमन्यत्र ।। ६८-७२ ।।

**अर्जुन उवाच—**

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्मोहः करिष्ये वचनं तव ।। ७३ ।।

नष्ट इति । नष्टो मोह इत्यादिना 'युद्धप्रवृत्तिस्तावदर्जुनस्योत्पन्ना, न तु सम्यग्ब्रह्मवित्त्वं जातम्' इति सूचयन् भाविनोऽनुगीतार्थस्यावकाशं ददाति ।। ७३ ।। अनुगीता See Int, XX

1. B,N मद्भक्तेषु
2. S,B,N मद्भक्तेष्वभि-

संजय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥

व्यासप्रसादाच्छ्रुतवान् एतद्गुह्यतरं महत् ।
योगं योगीश्वरात् कृष्णात् साक्षात्कथयतः स्वयम् ॥७५॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च पुनः पुनः ॥ ७६ ॥

तच्च संस्मृत्य परमं रूपमत्यद्भुतं हरेः ।
विस्मयो मे महाराज प्रहृष्ये च पुनः पुनः ॥ ७७ ॥

यत्र योगीश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

॥ इति श्रीमद्भगवद्गीतायां अष्टादशोऽध्यायः ॥

इत्यहमित्यादि मतिर्ममेत्यन्तम् । संजयवचनेन संवादमुपसंहरन् एतदर्थस्य गाढप्रबन्धक्रमेण निरन्तरचिन्तासन्तानोपकृतनैरन्तर्यादेव चान्ते सुपरिस्फुटनिर्विकल्पानुभवरूपतामापाद्यमानं स्मरणमात्रमेव परब्रह्मप्रदायकम् इत्युच्यते । एवं भगवदर्जुनसंवादमात्रस्मरणादेव तत्त्वावाप्त्या[1] श्रीविजयविभूतय इति ॥ ७४-७८ ॥

॥ शिवम् ॥

---

1. S, B तत्त्वव्याप्त्या

अत्र संग्रहश्लोकः—

भङ्क्त्वाऽज्ञानविमोहमन्थरमयीं सत्त्वादिभिन्नां धियं
प्राप्य स्वात्मविबोधसुन्दरतया[1] विष्णुं विकल्पातिगम् ।
यत्किञ्चित् स्वरसोद्यदिन्द्रियनिजव्यापारमात्रस्थिते(तो?)
हेलातः कुरुते तदस्य सकलं संपद्यते शंकरम् ।।

।। इति श्रीमहामाहेश्वराचार्यवर्यराजानकाभिनवगुप्तपाद-
विरचिते श्रीमद्भगवद्गीतार्थसंग्रहे अष्टादशोऽध्यायः ।।

[आचार्यप्रशस्तिः]

[2]श्रीमान् कात्यायनोऽभूद्वररुचिसदृशः प्रस्फुरद्बोधतृप्त-
स्तद्वंशालंकृतो यः स्थिरमतिरभवत् सौशुकाख्योऽतिविद्वान् ।
विप्रः श्रीभूतिराजस्तदनु समभवत् तस्य सूनुर्महात्मा
येनामी सर्वलोकास्तमसि निपतिताः प्रोद्धृता भानुनेव ।।१।।

तच्चरणकमलमधुपो
भगवद्गीतार्थसङ्ग्रहं व्यदधात् ।
अभिनवगुप्तः सद्द्विज-
[3]लोटकक्रृतचोदनावशतः ।। २ ।।

अत इदमयथार्थं वा
यथार्थमपि सर्वथा नैव ।

1. K स्वात्मविभूत-
2. S श्रीमत्कात्यायनो-
3. S लोठकक्रृत- B,N लोकक्रृत-

विदुषामसूयनीयं
कृत्यमिदं बान्धवार्थं हि ।। ३ ।।

अभिनवरूपा शक्ति-
स्तद्गुप्तो यो महेश्वरो देवः ।
तदुभयथामलरूपम्[1]
अभिनवगुप्तं शिवं वन्दे ।। ४ ।।

[2]परिपूर्णोऽयं श्रीमद्-
भगवद्गीतार्थसंग्रहः [सु]कृतिः ।
त्रिणयनचरण[वि]चिन्तन-
लब्धप्रसिद्धेरभिनवगुप्तस्य ।। ५ ।।

।। इति शिवम् ।।

---

1. B, K, S तदुभययामल-

2. This verse is given differently in different Mss.
S परिपूर्णोऽयं गीतार्थसंग्रहः ।
कृतिस्त्रिनयनचरणचिन्तनलब्ध-
प्रसिद्धेश्श्रीमदभिनवगुप्तस्य ।
B, N, K अत इत्ययमर्थसंग्रहः ।
[N substitutes this sentence with
परिपूर्णोऽयं श्रीमद्भगवद्गीतार्थसंग्रहः । ]
कृतिश्चेयं परमेश्वरचरण [K adds सरोरुह]चिन्तन-
लब्धचिदात्मसाक्षात्काराचार्याभिनवगुप्तपादानाम् ।

## ।। श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी ।।

श्लो. ३ (व्या) **सांख्यगृह्याः** - सांख्यानां पक्षमाश्रिताः, **तद्गृहासक्ताः पशवः पशुतुल्या** इति वा । ग्रह उपादाने इति धातोः 'पदास्वैरिबाह्यापक्ष्येषु च' (*PA*, III, i, 119) इति पक्ष्येऽर्थे क्यप् । 'गृह्यं गुदे ग्रन्थभेदे--- गृहासक्तमृगादौ ना ---' इति मेदिनी ।

**मीमांसककञ्चुकानुप्रविष्टा** इत्यस्य **पण्डिता** इत्युपरितनेन व्यवहितेन संबन्धः ।

**श्येनाद्येव तु हिंसा** इत्यादि । अत एव

> 'तस्मादनङ्गभूतायां हिंसायामेतदुच्यते ।
> उद्देशाच्च फलत्वेन श्येनादौ न विधीयते ।।
> भावनाविधिरप्येष फलांशाद्विनिवर्तते ।'

इत्यादि श्लोकवार्तिकम् (I,i,2,verses 235-36)। पार्थसारथिमिश्रोऽपि

> 'श्येनादौ हि विधीयमाने फलत्वेनोद्दिश्यते परं हिंसा ---न चैतावता तस्या विधेयत्वम् । न हि "यत् विधिप्रमेयं तत् विधेयम्" इति विधेयलक्षणम्; किं तर्हि? "यत्राप्रवृत्तः पुरुषो विधिवशात् प्रवर्तते तत् विधेयम्" । न च फलस्य तदस्ति; विधितः प्रागेव तत्र रागतः प्रवृत्तेरविधेयत्वम् --- तथा च --- साधनेतिकर्तव्यतयोरेव विधेयत्वं, न फलस्य' ।

इत्याह ।

**फलांशे** इत्यादि । श्लोकवार्तिके दृश्यमानपाठस्तु—

'फलांशे भावनायाश्च प्रत्ययो न विधायकः ।' इति । 'प्रत्ययोऽनुविधायक' इति पाठस्य यदि साधुत्वमिष्टम्, तदा लिङादिः प्रत्ययः रागतः प्राप्तस्यैव फलस्य अनु पश्चात् विधायकः अनुवादक इति यावत्, इति कथंचिन्नेयम् ।

**पण्डिता इति मन्यन्ते** इति । विद्वांस **इति** एवम्, अर्थात् 'न त्यजेत्' इत्येवं मन्यन्ते इत्यर्थः ॥

श्लो. ४-११ (व्या) **वैचित्र्यादिति** पञ्चम्यर्थस्य प्रयोज्यत्वस्य षष्ठ्यन्तत्यागपदार्थे, **चित्तवृत्त्येति** तृतीयार्थहेतुत्वस्य क्रियमाणस्येति धात्वर्थक्रियायाम्, **क्रियमाणस्येत्यस्यापि** सामानाधिकरण्येन षष्ठ्यन्तत्यागपदार्थे च अन्वयः ।

**वस्तुगत्या** - अन्यप्रभावारूषितयथावस्थितपदार्थस्वरूपेण । तृतीयार्थः अभेदः अव्यवहितोत्तरश्रूयमाणत्यागपदार्थैकदेशे त्यागत्वेऽन्वेति । **समतया** - समत्वबुद्ध्या; सहार्थयोगे तृतीया । **परिहारेणेति** तृतीयार्थः प्रयोज्यत्वं **फलप्रेप्साविरहे**ऽन्वेति । **विरहेणेति** तृतीयापि सहार्थयोगे ।

**सात्त्विकस्येति** । सात्त्विकपुरुषस्येत्यर्थः । षष्ठ्यर्थः कर्तृत्वं त्यागेऽन्वेति । **त्यागादिति** पञ्चम्यर्थप्रयोज्यत्वस्य फलपदार्थेऽन्वयः ।

**सत्यत** इति । सत्यत्वमत्र अबाधितार्थज्ञानजनकत्वम् । तसिः षष्ठ्यर्थे । अबाधितज्ञानजनिकायाः त्यागवाच इति सामानाधिकरण्येनान्वयः । **युक्तिः** — योगः, प्रयोगः ॥

श्लो. १२ (मू) **प्रेत्येति** । प्रेत्य स्थितानामत्यागिनामित्यन्वयः ॥

श्लो. १३-१७ (व्या) **विविदिषा, अविविदिषा** इति च्छेदः ।

**बुद्धिगतम्, रजोलब्धवृत्तिकम्, -पंचकपरिणामि इति** त्रितयं कर्मशब्दार्थविशेषणम् ।

**बुद्धिलक्षणः** - बुद्धिः अन्तःकरणं लक्षणम्, चिह्नम् अवच्छेदकं वा यस्य सः कर्ता बुद्ध्यवच्छिन्नः ॥

श्लो. १८ (मू) **ज्ञानम्** इत्यत्र ज्ञायते अनेनेति करणव्युत्पत्तिरभिमता । व्यक्तीभविष्यतीदमनुपदमेव ।

(व्या) **कर्मणि चोदनेति** । सप्तम्यर्थो विषयत्वम् ।

**त्रिविधा कर्मचोदनैव त्रिविधः कर्मसंग्रहः** इति मूलगतपूर्वोत्तरार्धार्थयोरभेदान्वयम् 'येषां तेषाम्' इत्यध्याहारेण दर्शयिष्यन् व्याख्यातुमारभते - **तत्समये येषाम् - - - - - - - - - - तेषामिति** ।

**अबोधमात्रनिष्ठत्वात्** इति । न बोधः अबोधः असम्यग्ज्ञानं द्वैतज्ञानम्, तन्मात्रनिष्ठत्वात् इत्यर्थः । अथवा बोध-

मात्रनिष्ठत्वादित्येव विवक्षितमाचार्येण (अकारो लेखकप्रमादादागतः?)। एवं च बोधमात्रस्य जानातीच्छति करोतीति रीत्या कर्मणि प्रथमप्रवर्तकतया कर्मचोदनेति मूलेन संगतिः।

**तेषामेवे**त्यस्य **स्वीकरणम्**, **अभिधेयत्वम्**, तथा **आविष्टत्वात्** इत्येतैर्व्यवहितैः संबन्धः। **सम्यग्ग्रहणरूपमिति**, कर्मणीत्यादिः। तथाच **कर्मसंग्रहः** इति मूलस्य कर्मणि संग्रह इति सप्तमीसमास इति बोध्यम्॥

श्लो. १९ (व्या) **यत् करणमित्यादि**। यत् द्विविधं करणं तदुक्तमिति संबन्धः॥

श्लो. २०-२२ (अ) **ज्ञानकरणसामान्यस्ये**ति - ज्ञप्तिकरणानां क्रियाकरणानां च यत् सामान्यं तस्येत्यर्थः।

**कर्मणो ज्ञेयकार्यरूपस्येत्यादि**। अत्रेदं विवक्षितमिव – 'कर्मणो ज्ञेयकार्यरूपेण द्विविधस्य त्रैविध्यम् ---- कर्तुः ज्ञातृकर्तृरूपेण द्विरूपस्य संक्षेपेण त्रिविधं स्वरूपम्; करणविशेषस्य द्विविधस्य त्रिविधस्वरूपभेदप्रतिपादनार्थम्' इत्यादि। अतो न काप्यनुपपत्तिः। अस्मिंश्च वाक्ये **कर्मण** इति - धात्वर्थफलशालिन इत्यर्थः। **ज्ञेयकार्यरूपेण** - ज्ञानविषयत्वक्रियानिर्वर्त्यत्वाभ्याम्। **ज्ञातृकर्तृरूपेण** - ज्ञातृत्वरूपेण क्रियानिर्वर्तने स्वातन्त्र्यरूपेण च। **त्रिविधे**ति स्थलद्वयेऽपि प्रत्येकमित्यादिः॥

श्लो. २० (मू) **ज्ञानमिति**। पूर्वोक्तरीत्या ज्ञानकरणमित्यर्थः ॥

श्लो. २१ (मू) **यज्ज्ञानमिति**। येन ज्ञानेनेत्यर्थः। अत्र करणे कर्तृत्वोपचारः 'एधांसि पचन्ति' इत्यादाविवेति श्रीमधुसूदनसरस्वत्यः ॥

श्लो. २२ (मू) **यत्त्वकृत्स्न**विदिति काश्मीरपाठः ॥

श्लो. २६-२८ (व्या) **तच्छीलस्तद्धर्मा तत्साधुकारी वा यो न भवति इत्यनहंवादी इत्यनेन णिनिनेति**। एवं विलिखत आचार्यस्यापाततोऽयमभिप्राय इव – णिनिप्रत्यय एतेष्वर्थेषु भवति इति। अत्रेदं चिन्त्यते - णिनेरिमेऽर्थास्तदा भवितु – मर्हन्ति यदि तद्विधायकस्य 'सुप्यजातौ णिनिस्ताच्छील्ये' (*PA*, III, ii, 78) इति सूत्रस्य 'आ क्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' (*PA*, III, ii, 134) इत्यधिकारविषयत्वं (१३४-१७७) स्यात्; नान्यथा। परन्तु पूर्वोपदर्शितणिनिविधायकशास्त्रस्यैतदधिकारबहिर्भूततया आचार्यादृतः पन्था नातीव क्षोदक्षम इव। परन्तु 'सुप्यजातौ' इति सूत्रस्य तदधस्तनेन 'साधुकारिण्युपसंख्यानम्' इति वार्त्तिकेन सहैकवाक्यतया अर्थवर्णनस्यावश्यकत्वेन तच्छीले तत्साधुकारिणि च णिनेः प्राप्तौ तदर्थद्वयमध्यगतत्वेन उक्ताधिकारसूत्रादवगम्यमाने तद्धर्मार्थेऽपि णिनिः सन्दंशन्यायेन भवति इति वा; काशिकायाम् पूर्वोक्तवार्तिकस्य 'साधुकारिणि च' इति पाठदर्शनात् तत्रत्यचकारः अनुक्तं तद्धर्मार्थमपि समुच्चिनोति इति वा आचार्यस्याशय इति प्रतिभाति।

अन्यच्च – तन्त्रवार्तिके प्रथमाध्यायतृतीयपादे सप्तमसूत्रव्याख्यानावसरे **ब्रह्मवादि**शब्दस्यार्थविचारप्रस्तावे णिनिमधिकृत्य भट्टपादैः 'तच्छीलतद्धर्मतत्साधुकारित्वनिमित्तत्वात्' इति दर्शितम्। तदनुसारेणाभिनवगुप्तपादैरपि विलिखितमित्यपि पश्यामः। भट्टपादस्यायमाशयः– 'सुप्यजातौ' इति सूत्रेण ताच्छील्ये तदधस्तनेन वार्तिकेन साधुकारिणि चार्थे णिनिः। 'आवश्यकाधमर्ण्ययोर्णिनिः' (*PA*, III, iii, 170) इति आवश्यकार्थकणिनिस्तु तद्धर्मार्थे पर्यवस्यति। न त्विह 'आ क्वेः' इति सूत्रस्य व्यापारोऽस्ति इति। विस्तरस्तु शब्दकौस्तुभे प्रौढमनोरमायां च 'ब्रह्मणि वद उपसंख्यान'मिति वार्तिकस्य सुप्यजातावितिसूत्राधस्तनस्यार्थविचारसंदर्भे ॥

श्लो. २९ (व्या) **पदार्थस्त्वप्रसिद्ध** इत्यादि। अत ऊर्ध्वं तु अप्रसिद्धः पदार्थ एव व्याख्यास्यते इत्यर्थः ॥

श्लो. ३५ (मू) **मदमेव** चेति रामकण्ठीयः पाठः ॥

श्लो. ३३-३५ (व्या) **योगेन धारयतीति** विवक्षितयोगस्वरूपमाह - **किं ममेत्यादिना**। तथा च एतादृशयोगस्वरूपया धृत्या अव्यभिचारिण्या, सात्त्विकं पुरुषं कदाप्यविमुञ्चन्त्या धारयति इति मूलार्थोऽभिप्रेत आचार्येणेति भाति ॥

श्लो. ३६-३९ (व्या) **आत्मप्रसादात् बुद्धिप्रसादो जायत** इति। अयं च कार्यकारणभावरूपोऽर्थः **आत्मबुद्धि-**

**प्रसादजमित्यस्य** मूलस्यार्थिकार्थ एव; स च आत्मबुद्धिपदयोः पूर्वापरीभावसूचितः । विग्रहस्तु आत्मा च बुद्धिश्च आत्मबुद्धी; प्रसादाज्जायत इति प्रसादजम्, आत्मबुद्धयोः प्रसादजमिति ।।

श्लो. ४० (व्या) **परस्परेत्यादि** । परस्परम् अङ्गाङ्गिभावस्य बाध्यबाधकभावस्य समुच्चयस्य च समाहारः, तस्मादित्यर्थः । **वृत्तीत्यादि** - वृत्तीनां क्रमस्य यौगपद्यादेश्च योगात् संबन्धात् इत्यर्थः । समुच्चयात् योगात् इति पञ्चमीद्वयस्याप्यर्थः प्रयोज्यत्वम् अपरिसंख्येयभेदे अन्वेति । **अपरिसंख्येयभेदत्वात्** इति - न परिसंख्येया भेदा येषां कर्त्रादीनां तेषां भावस्तस्मादिति विग्रहः । इयं च पञ्चमी विविधफलप्रसवसामर्थ्यान्वयि हेतुत्वमाह ।

अत्र च प्रकरणे—

त्रिगुणमविवेकि - - - - -प्रसवधर्मि ।

- - - - - - - - - - - - - - - - - - -

अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः ।।

इति सांख्यकारिका (११-१२) अप्यनुसन्धेया । **कर्मणां प्राक्सूत्रितं गहनत्वमिति** - चतुर्थाध्याये 'गहना कर्मणो गतिः' (श्लो. १७) इति सामान्यतः अतिसंग्रहेणोक्तं दुर्ज्ञेयत्वम् । **वितत्येति** - विस्तृत्येत्यर्थः । **अत्र प्रकरणे** इत्यादिः ।

श्लो. ४१-६० (अ) **ज्ञानबुद्ध्या** - ज्ञानम् उक्तदैवसंपन्निमित्तकं दैवं ज्ञानम्, तद्वासितया बुद्ध्या अन्तःकरणेन मनसा । तृतीया करणत्वे सहार्थयोगे वा ।

**व्यक्त्यापन्नम्** - व्यक्तिमापन्नमिति द्वितीयासमासः ।

**फलविभागितेति** । विशेषेण भागिता विभागिता फलस्य विभागिता फलविभागितेति विग्रहार्थः । विशेषेण फलभागितेति यावत् । यद्वा फलभागितेत्येव विवक्षितम् ॥

श्लो. ४४ (मू) **पर्युत्थानमिति** अस्वातन्त्र्यस्य विनयस्य च द्योतकम् आसनपरित्यागं शक्त्या बोधयति, तत्पूर्विकां शुश्रूषां च लक्षणया ॥

श्लो. ५५ (मू) **योऽहं यश्चास्मि तत्त्वत** इति रामकण्ठीयः पाठः । अयमभिप्रायः - भक्तः भक्त्या साधनेन मां वासुदेवं परमात्मानम् अभिजानाति । अथवा भक्त्येति तृतीयार्थोऽभेदः अभिजानातीति धात्वर्थे ज्ञानेऽन्वेति । एवं च भक्त्यात्मकं यत् मद्विषयकमभिज्ञानं तदाश्रय इत्यर्थः । केन प्रकारेण स जानाति ? '**यः** वासुदेव एव **अहम्** (भक्तवाची अस्मच्छब्दः) मत्स्वरूपः' इति सोऽभिजानाति । अपि नामेदमस्य ज्ञानं तत्त्वज्ञानम्? ओमित्याह - **यश्चास्मि तत्त्वतः** इति । यः भक्तश्च एवास्मि अहम् तत्त्वतः परमार्थदृष्ट्या । तथा च 'वासुदेवोऽहम्' इति भक्तस्य यज्ज्ञानं तत् तत्त्वज्ञानमेवेति भावः । अभिजानातीत्यनेनायमेव अभिज्ञः, विज्ञः कृतीति सूचयति । अस्य च तत्त्वज्ञानस्य फलं दर्शयति - **ततो मामिति** ॥

श्लो. ४१-६० (व्या) **ब्राह्मणादीनामिति** । इदं च कर्मणि स्वभावे चान्वेति । **निरूपणस्येति** शेषषष्ठ्यर्थकर्मत्वं धात्वर्थातिक्रमान्वयि ॥

श्लो. ६१-६२ (व्या) **निर्वाहवाक्यम्** - गीताशास्त्रार्थस्य निर्वहणात्मकं वाक्यम् । **वासुदेवम्** – वसुदेवस्य सूनुं गीताचार्यम् ।।

श्लो. ६३ (व्या) **वेदान्तादपि गुह्यमित्यादि** । यद्यपि वेदान्तो जीवब्रह्मणोरैक्यरूपमद्वैतं रहस्यं तत्त्वं बोधयतीति गुह्य एव । तथापि सर्वस्यापि जगतो ब्रह्मप्रकृतिकत्वात् चेतनावत्त्वं ब्रह्माभिन्नत्वमिति रहस्यतरपरमाद्वैततत्त्वप्रकाशकतया अस्य गीताशास्त्रस्य वेदान्तापेक्षयापि गुह्यतरत्वमिति भावः ।।

श्लो. ६६ (व्या) **नष्टो मोह** इत्यर्जुनवाक्यानुसारेण **मा शुच** इति भगवद्वाक्यार्थमाह– **किंकर्तव्यतामोहं मा गा** इति ।।

श्लो. ६७ (व्या) **अस्य ज्ञानस्येत्यादि** । इदं ज्ञानं गोप्यमानं सत् सिद्धिदमिति पर्यवसितार्थः ।

**अवस्तुनि** - अयथार्थे, निष्प्रयोजने वा ।।

श्लो. ६८-७१ (व्या) **विधिरेवैषः नार्थवाद** इति । अत्र च शाङ्करं भाष्यम्—

'-- गीताशास्त्राध्ययनं स्तूयते । फलविधिरेव वा ---'
(XVIII, 70) इत्यादि ।।

श्लो. ७५ (मू) **एतद्गुह्यतमं महत्** । अत्र 'एतदित्यादिपदानां सामान्योपक्रमविवक्षया नपुंसकत्वम्; वाक्यस्य विशेषाभिधायित्वात् योगशब्दः पुंस्येव बोद्धव्य' इति रामकण्ठः ।।

श्लो. ७४-७८ (व्या) **इत्युच्यत** इत्यत्र **इति वक्ति** इति विवक्षितमिव । धात्वर्थकर्तुः **उपसंहरन्** इति कर्मकर्तृत्वाद्यनव-

रुद्धत्वे सति प्रथमान्तपदोपस्थापितत्वात्। कर्ता चात्र भगवान् वेदव्यासः। अथवा उच्यते इति कर्मणि लकारानुरोधेन उपसंहरन् इत्यस्य स्थाने उपसंहरता इति कर्तरि तृतीयान्तं पदं पठनीयमिति ॥

संग्रहश्लोके **व्यापारमात्रस्थिते** इति मातृकासूपलभ्यमानः पाठः **कुरुते** इति धात्वर्थोत्थापितकर्त्राकाङ्क्षोपशमनाय **व्यापारमात्रस्थितः** इति विपरिणामितोऽस्माभिः। एवं च सत्त्वादिभिन्नां धियं भङ्क्त्वा, विष्णुं प्राप्य, स्वरसोद्यदिन्द्रियनिजमात्रस्थितः, अर्थात् तत्त्वदर्शी, यत्किंचित् करोतीत्यन्वयः। अथवा **अस्य** इति चतुर्थपादस्थपदानुरोधेन **य** इति कर्तृवाचकपदमध्याहृत्य **इन्द्रियनिजव्यापारमात्रे स्थिते** इति विपरिणम्य विष्णुं प्राप्य निरुक्तव्यापारमात्रे स्थिते सति यो यत्किंचित् कुरुते तत् अस्येति अन्वयो वर्णनीयः ॥

आचार्यप्रशस्तौ चतुर्थश्लोके **तद्गुप्तो यो महेश्वर** इति। आदिशक्तिम् अम्बां रुद्रमहेश्वरगोप्त्रीमाह भगवती श्रुतिरपि—

'अवाम्ब! रुद्रमदिमह्यव देवं त्र्यम्बकम्।'

(तै. सं. I, viii, 6)

इति।

॥ शिवम् ॥

**क्वाहं मन्दमतिः क्वेयं प्रक्रिया स्पन्दतन्त्रगा।**
**तत्राप्यगाधो गूढार्थः श्रीमद्गीतार्थसंग्रहः ॥ १ ॥**

आचार्याभिनवगुप्तस्यातिसंक्षिप्तलेखिनः ।
तथापि तत्कृपावेशाद्यत्किंचिल्लिखितं मया ।। २ ।।

श्रीमच्छङ्करनारायणाख्येन गुरुभक्तितः ।
तेन संप्रीयतां कृष्णो वासुदेवः शिवाद्वयः ।। ३ ।।

कृष्णेन वासुदेवेन पुरा गीता रणांगणे ।
पार्थायानुगृहीता तां महामाहेश्वराग्रणीः ।। ४ ।।

आचार्योऽभिनवो गुप्तो व्याचख्यावतिगूढवाक् ।
तत्प्रसादाच्च तां व्याख्यां गीतार्थसंग्रहभिधाम् ।। ५ ।।

गुप्तार्थाभिनवां प्रत्नां शिवामतिशुभोदयाम् ।
अविस्तृतामगाधां च प्रकटीकृत्य यत्नतः ।। ६ ।।

टिप्पण्याङ्गलभाषायामनुवादादिना सह ।
श्रीमच्छङ्करनारायणाख्योऽर्पयति सन्मुदे ।
सच्चिदानन्दमूर्त्याख्यसूरिणा चोदितः स्वयम् ।। ७ ।।

योऽध्येता यजुषां महागुरुवरश्रीश्रीनिवासात् पितुः
सच्छास्त्रे शिवरामकृष्णकृतिना यः शिक्षितः सादरम् ।
सोऽयं शङ्करपूर्वको रचितवान्नारायणष्टिप्पणीं
सुब्रह्मण्यबुधेन्द्रबोधितनयः श्रीकृष्णसन्तुष्टये ।। ८ ।।

चन्द्राभ्रशक्तिभूसंख्ये (१९०१) शाके सिद्धार्थवत्सरे ।
चैत्रे कृष्णाष्टमीयुक्ते शुक्रे भे वैश्वदेविके ।। ९ ।।

मेषलग्ने गता पूर्तिं टीकादिः सुमिताक्षरा।
जीयात् सद्विविदुषां तुष्टचै यावच्चन्द्रदिवाकरम् ।।१०।।

प्रीयतामनया श्रीनिवासः शक्तियुतः शिवः ।
यन्मूर्तिः सच्चिदानन्दरूपा मे हृदि राजते ।
नाम्ना श्रीचन्द्रपूर्वः शेखरः संयमीश्वरः ।। ११ ।।

।। इति श्रीमद्भगवद्गीतार्थसंग्रहटिप्पण्यामष्टादशोऽध्यायः ।।

इति
श्रीशङ्करनारायणीया
श्रीमद्भगवद्गीतार्थसंग्रहटिप्पणी
समाप्ता





## १.—श्रीमद्भगवद्गीताश्लोकानामनुक्रमणिका

## २.—श्रीमद्भगवद्गीताश्लोकपाठभेदानामनुक्रमणिका

| श्लो.पाद.सं. | एतत्पुस्तकपाठः | सार्वत्रिकपाठः |
|---|---|---|

### प्रथमोऽध्यायः

| | | |
|---|---|---|
| 1b | सर्वक्षत्रसमागमे | समवेता युयुत्सवः |
| 7e | सैन्ये महति ये सर्वे | नास्ति |
| 7f | नेतारः शूरसंमताः | |
| 8b | कृपः शल्यो जयद्रथः | कृपश्च समितिंजयः |
| 8d | सौमदत्तिश्च वीर्यवान् | सौमदत्तिस्तथैव च |
| 9d | नानायुद्धविशारदाः | सर्वे युद्धविशारदाः |
| 10b | बलं भीमाभिरक्षितम् | बलं भीष्माभिरक्षितम् |
| 10d | बलं भीष्माभिरक्षितम् | बलं भीमाभिरक्षितम् |
| 18a | पाञ्चालश्च महेष्वासो | द्रुपदो द्रौपदेयाश्च |
| 18b | द्रौपदेयाश्च पञ्च ये | सर्वशः पृथिवीपते |
| 26d | सीदमानोऽब्रवीदिदम् | विषीदन्निदमब्रवीत् |
| 30d | न राज्यं न सुखानि च | न च राज्यं सुखानि च |
| 34d | हेतोः किमु महीकृते | हेतोः किं नु महीकृते |

### द्वितीयोऽध्यायः

| | | |
|---|---|---|
| 1c | सीदमानमिदं वाक्यम् | विषीदन्तमिदं वाक्यम् |
| 3a | मा क्लैब्यं गच्छ कौन्तेय | क्लैब्यं मा स्म गमः पार्थ |
| 5b | श्रेयश्चर्तुं भैक्षमपीह लोके | श्रेयो भोक्तुं भैक्षमपीह लोके |

| | | |
|---|---|---|
| 5c | नत्वर्थकामस्तु गुरून् निहत्य | हत्वार्थकामांस्तु गुरूनिहैव |
| 6d | ते नः स्थिताः प्रमुखे धार्तराष्ट्राः | तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः |
| 10d | सीदमानमिदं वचः | विषीदन्तमिदं वचः |
| 11 | त्वं मानुष्येणोपहतान्तरात्मा विषादमोहाभिभवाद्विसंज्ञः । कृपागृहीतः समवेक्ष्य बन्धून् अभिप्रपन्नान् मुखमन्तकस्य ॥ | नास्ति |
| 12a | अशोच्याननुशोचंस्त्वम् | अशोच्यानन्वशोचस्त्वम् |
| 12b | प्राज्ञवन्नाभिभाषसे | प्रज्ञावादांश्च भाषसे |
| 13a | न ह्येवाहं जातु नासम् | न त्वेवाहं जातु नासम् |
| 13d | सर्वे वयमितः परम् | सर्वे वयमतः परम् |
| 14d | धीरस्तत्र न शोचति | धीरस्तत्र न मुह्यति |
| 19c | विनाशिनोऽप्रमेयस्य | अनाशिनोऽप्रमेयस्य |
| 22d | हन्यते हन्ति वा कथम् | कं घातयति हन्ति कम् |
| 27a | अथ वैनं नित्यजातम् | अथ चैनं नित्यजातम् |
| 27d | नैवं शोचितुमर्हसि | नैनं शोचितुमर्हसि |
| 30b | आश्चर्यवद्वदति तथैनमन्यः | आश्चर्यवद्वदति तथैव चान्यः |

| | | |
|---|---|---|
| 33c | सुख्योऽन्ये क्षत्रियाः पार्थ | सुखिनः क्षत्रियाः पार्थ |
| 36c | एषां च त्वं बहुमतः | येषां च त्वं बहुमतः |
| 40b | बुद्धिर्योगे यथा शृणु | बुद्धिर्योगे त्विमां शृणु |
| 41a | नेहातिक्रमनाशोऽस्ति | नेहाभिक्रमनाशोऽस्ति |
| 42b | एकैव कुरुनन्दन | एकेह कुरुनन्दन |
| 44b | जन्मकर्मफलेप्सवः | जन्मकर्मफलप्रदाम् |
| 44c | क्रियाविशेषबहुला | क्रियाविशेषबहुलां |
| 44d | भोगैश्वर्यगतीः प्रति | भोगैश्वर्यगतिं प्रति |
| 50 | यस्य सर्वे समारम्भा<br>निराशीर्बन्धनास्त्विह ।<br>त्यागे यस्य हुतं सर्वं<br>स त्यागी स च बुद्धिमान् ॥ | नास्ति |
| 52a | बुद्धियुक्तो जहातीमे | बुद्धियुक्तो जहातीह |
| 55b | यदा स्थास्यति निश्चिता | यदा स्थास्यति निश्चला |
| 56c | स्थिरधीः किं प्रभाषेत | स्थितधीः किं प्रभाषेत |
| 56d | किमासीत व्रजेच्च किम् | किमासीत व्रजेत किम् |
| 58d | स्थिरधीर्मुनिरुच्यत | स्थितधीर्मुनिरुच्यते |
| 60d | स्थितप्रज्ञस्तदोच्यते | तस्य प्रज्ञा प्रतिष्ठिता |
| 62a | यत्तस्यापि हि कौन्तेय | यततो ह्यपि कौन्तेय |
| 63a | तानि संयम्य मनसा | तानि सर्वाणि संयम्य |
| 66a | रागद्वेषविमुक्तैस्तु | रागद्वेषवियुक्तैस्तु |
| 70b | निगृहीतानि सर्वतः | निगृहीतानि सर्वशः |
| 71d | सा रात्रिः पश्यतो मुनेः | सा निशा पश्यतो मुनेः |

## तृतीयोऽध्यायः

| | | |
|---|---|---|
| 3b | पुरैकोक्ता मयानघ | पुरा प्रोक्ता मयानघ |
| 6d | मूढाचारः स उच्यते | मिथ्याचारः स उच्यते |
| 12a | इष्टान् भावान् हि वो देवाः | इष्टान्भोगान् हि वो देवाः |
| 17a | यश्चात्मरतिरेव स्यात् | यस्त्वात्मरतिरेव स्यात् |
| 22d | प्रवर्तेऽथ च कर्मणि | वर्त एव च कर्मणि |
| 23c | मम वर्त्मानुवर्तेरन् | मम वर्त्मानुवर्तन्ते |
| 27b | गुणैः कर्माणि भागशः | गुणैः कर्माणि सर्वशः |
| 28c | गुणा गुणार्थे वर्तन्ते | गुणा गुणेषु वर्तन्ते |
| 31b | अनुवर्तन्ति मानवाः | अनुतिष्ठन्ति मानवाः |
| 31d | मुच्यन्ते सर्वकर्मभिः | मुच्यन्ते तेऽपि कर्मभिः |
| 32b | नानुवर्तन्ति मे मतम् | नानुतिष्ठन्ति मे मतम् |
| 35d | परधर्मोदयादपि | परधर्मो भयावहः |
| 36c | अनिच्छमानोऽपि बला- | अनिच्छन्नपि वार्ष्णेय |
| 36d | दाक्रम्येव नियोजितः | बलादिव नियोजितः |
| 38 | अर्जुन उवाच—<br>भवत्येष कथं कृष्ण<br>कथं चैव विवर्धते ।<br>किमात्मकः किमाचारः<br>तन्ममाचक्ष्व पृच्छतः ॥ | नास्ति |

| | | |
|---|---|---|
| 39 | श्रीभगवानुवाच—<br>एष सूक्ष्मः परः शत्रुः<br>देहिनामिन्द्रियेषु ह ।<br>सुखतन्त्र इवासीनो<br>मोहयन् पार्थ तिष्ठति ॥ | नास्ति |
| 40 | कामक्रोधमयो घोरः<br>स्तम्भहर्षसमुद्भवः<br>अहंकारोऽभिमानात्मा<br>दुस्तरः पापकर्मभिः ॥ | नास्ति |
| 41 | हर्षमस्य निवर्त्यैष<br>शोकमस्य ददाति च ।<br>भयं चास्य करोत्येष<br>मोहयंस्तु मुहुर्मुहुः ॥ | नास्ति |
| 42 | स एष कलुषः क्षुद्र-<br>श्छिद्रप्रेक्षी धनञ्जय ।<br>रजःप्रवृत्तो मोहात्मा<br>मनुष्याणामुपद्रवः ॥ | नास्ति |
| 43d | तथा तेनायमावृतः | तथा तेनेदमावृतम् |

## चतुर्थोऽध्यायः

| | | |
|---|---|---|
| 1a | एवं विवस्वते योगम् | इमं विवस्वते योगम् |
| 2c | स कालेनैव महता | स कालेनेह महता |
| 4c | कथमेवं विजानीयाम् | कथमेतद्विजानीयाम् |
| 7d | तदात्मांशं सृजाम्यहम् | तदात्मानं सृजाम्यहम् |

| | | |
|---|---|---|
| 10b | मन्मया मद्व्यपाश्रयाः | मन्मया मामुपाश्रिताः |
| 13b | गुणकर्मविभागतः | गुणकर्मविभागशः |
| 14b | न मे कामः फलेष्वपि | न मे कर्मफले स्पृहा |
| 18a | कर्मण्यकर्म यः पश्यति | कर्मण्यकर्म यः पश्येत् |
| 18d | स चोक्तः कृत्स्नकर्मकृत् | स युक्तः कृत्स्नकर्मकृत् |
| 23c | यज्ञायारभतः कर्म | यज्ञायाचरतः कर्म |
| 34c | उपदेक्ष्यन्ति ते तत्त्वम् | उपदेक्ष्यन्ति ते ज्ञानम् |
| 42c | छित्त्वैवं संशयं योगम् | छित्त्वैनं संशयं योगम् |

## पञ्चमोऽध्यायः

| | | |
|---|---|---|
| 1c | यः श्रेयानेतयोरेकः | यच्छ्रेय एतयोरेकम् |
| 1d | तं मे ब्रूहि विनिश्चितम् | तन्मे ब्रूहि सुनिश्चितम् |
| 3d | सुखं बन्धाद्विमुच्यते | सुखं बन्धात् प्रमुच्यते |
| 5b | तद्योगैरनुगम्यते | तद्योगैरपि गम्यते |
| 11d | संगं त्यक्त्वात्मसिद्धये | संगं त्यक्त्वात्मशुद्धये |
| 16d | प्रकाशयति तत् स्वयम् | प्रकाशयति तत्परम् |
| 17d | ज्ञाननिर्धौतकल्मषाः | ज्ञाननिर्धूतकल्मषाः |

18-19 Between these verses the Vulgate reads the 10th verse of Ch. VI of the present edition.

| | | |
|---|---|---|
| 20b | विन्दत्यात्मनि यः सुखम् | विन्दत्यात्मनि यत्सुखम् |
| 20d | सुखमव्ययमश्नुते | सुखमक्षयमश्नुते |
| 22b | प्राक् शरीरविमोचनात् | प्राक् शरीरविमोक्षणात् |
| 22d | स योगी स सुखी नरः | स युक्तः स सुखी नरः |

| | | |
|---|---|---|
| 23c | स पार्थ परमं योगम् | स योगी ब्रह्मनिर्वाणम् |
| 25a | कामक्रोधविमुक्तानाम् | कामक्रोधवियुक्तानाम् |
| 25c | सर्वतो ब्रह्मनिर्वाणम् | अभितो ब्रह्मनिर्वाणम् |

## षष्ठोऽध्यायः

| | | |
|---|---|---|
| 6c | अजितात्मनस्तु शत्रुत्वे | अनात्मनस्तु शत्रुत्वे |
| 7b | परात्मसु समा मतिः | परमात्मा समाहितः |
| 10 | This verse is the same as Ch. V, verse 19 of the Vulgate. See above. | |
| 14b | संपश्यन्नासिकाग्रं स्वम् | संप्रेक्ष्य नासिकाग्रं स्वम् |
| 16b | मद्भक्तोऽनन्यमानसः | योगी नियतमानसः |
| 17a | योगोऽस्ति नैवात्यशतः | नात्यश्नतस्तु योगोऽस्ति |
| 17d | नातिजागरतोऽर्जुन | जाग्रतो नैव चार्जुन |
| 20d | युञ्जतो योगमात्मनि | युञ्जतो योगमात्मनः |
| 21b | निरुद्धं योगसेवनात् | निरुद्धं योगसेवया |
| 24d | योगेऽनिर्विण्णचेतसा | योगोऽनिर्विण्णचेतसा |
| 25b | त्यक्तुं सर्वानशेषतः | त्यक्त्वा सर्वानशेषतः |
| 29b | योगी नियतमानसः | योगी विगतकल्मषः |
| 29c | सुखेन ब्रह्मसंयोग- | सुखेन ब्रह्मसंस्पर्श- |
| 29d | मत्यन्तमधिगच्छति | मत्यन्तं सुखमश्नुते |
| 32d | स योगी नैव लिप्यते | स योगी मयि वर्तते |
| 34d | चञ्चलत्वात् स्थितिं पराम् | चञ्चलत्वात् स्थितिं स्थिराम् |
| 38a | अयतः श्रद्धयोपेतः | अयतिः श्रद्धयोपेतः |

| | | |
|---|---|---|
| 38c | लिप्समानः सतां मार्गं | नास्ति |
| 38d | प्रमूढो ब्रह्मणः पथि ॥ | |
| 39a | अनेकचित्तो विभ्रान्तो | |
| 39b | मोहस्यैव वशं गतः । | |
| 40d | विनाशं वाधिगच्छति | विमूढो ब्रह्मणः पथि |
| 42d | दुर्गतिं जातु गच्छति | दुर्गतिं तात गच्छति |
| 44b | जायते धीमतां कुले | कुले भवति धीमताम् |
| 45c | ततो भूयोऽपि यतते | यतते च ततो भूयः |
| 46b | ह्रियते ह्यवशोऽपि सन् | ह्रियते ह्यवशोऽपि सः |

**सप्तमोऽध्यायः**

| | | |
|---|---|---|
| 1b | योगं युञ्जन् मदाश्रितः | योगं युञ्जन् मदाश्रयः |
| 2c | यज्ज्ञात्वा न पुनः किञ्चित् | यज्ज्ञात्वा नेह भूयोऽन्यत् |
| 5a | अपरेयमितोऽनन्याम् | अपरेयमितस्त्वन्याम् |
| 8b | प्रकाशः शशिसूर्ययोः | प्रभास्मि शशिसूर्ययोः |
| 8c | प्रणवः सर्ववेदे यः | प्रणवः सर्ववेदेषु |
| 9a | पुण्यः पृथिव्यां गन्धोऽस्मि | पुण्यो गन्धः पृथिव्यां च |
| 14d | मायामतितरन्ति ते | मायामेतां तरन्ति ते |
| 16b | जनाः सुकृतिनः सदा | जनाः सुकृतिनोऽर्जुन |
| 18b | ज्ञानी त्वात्मैव मे मतः | ज्ञानी त्वात्मैव मे मतम् |
| 26c | भविष्यन्ति च भूतानि | भविष्याणि च भूतानि |
| 28a | येषां त्वन्तं गतं पापम् | येषां त्वन्तगतं पापम् |

## अष्टमोऽध्यायः

| | | |
|---|---|---|
| 4d | देहे देहभृतां वरः | देहे देहभृतां वर |
| 5a | अन्तकालेऽपि मामेव | अन्तकाले च मामेव |
| 7c | मदर्पितमनोबुद्धिः | मय्यर्पितमनोबुद्धिः |
| 10b | भक्त्या युक्तो योगबलेन चैवम् | भक्त्या युक्तो योगबलेन चैव |
| 11d | तत्ते पदं संग्रहेणाभिधास्ये | तत्ते पदं संग्रहेण प्रवक्ष्ये |
| 13d | मद्भावं याति स ध्रुवम् | स याति परमां गतिम् |
| 17b | अहर्ये ब्रह्मणो विदुः | अहर्यद्ब्रह्मणो विदुः |
| 20b | व्यक्ताव्यक्तः सनातनः | (अ)व्यक्तोऽव्यक्तात्सनातनः |
| 22a | यं प्राप्य न पुनर्जन्म | नास्ति |
| 22b | लभन्ते योगिनोऽर्जुन | |
| 22d | यत्र सर्वं प्रतिष्ठितम् | येन सर्वमिदं ततम् |
| 26c | अनयोर्यात्यनावृत्ति- | एकया यात्यनावृत्ति- |
| 26d | माद्ययावर्ततेऽन्यया | मन्ययावर्तते पुनः |

## नवमोऽध्यायः

| | | |
|---|---|---|
| 7 | एवं हि सर्वभावेषु<br>चराम्यनभिलक्षितः ।<br>भूतप्रकृतिमास्थाय<br>सहैव च विनैव च ॥ | नास्ति |
| 12b | मानुषीं तनुमास्थितम् | मानुषीं तनुमाश्रितम् |
| 12d | ममाव्ययमनुत्तमम् | मम भूतमहेश्वरम् |
| 13c | आसुरीं राक्षसीं चैव | राक्षसीमासुरीं चैव |

| | | |
|---|---|---|
| 15a | सततं कीर्तयन्तश्च | सततं कीर्तयन्तो मां |
| 15b | यतन्तश्च यतव्रताः | यतन्तश्च दृढव्रताः |
| 25d | तत्त्वेनातश्चलन्ति ते | तत्त्वेनातश्च्यवन्ति ते |
| 32d | न मद्भक्तः प्रणश्यति | न मे भक्तः प्रणश्यति |

## दशमोऽध्यायः

| | | |
|---|---|---|
| 8a | अयं सर्वस्य प्रभव | अहं सर्वस्य प्रभवो |
| 8b | इतः सर्वं प्रवर्तते | मत्तः सर्वं प्रवर्तते |
| 13d | स्वयं चैव ब्रवीषि माम् | स्वयं चैव ब्रवीषि मे |
| 14b | यन्मे वदसि केशव | यन्मां वदसि केशव |
| 14d | विदुर्देवा महर्षयः | विदुर्देवा न दानवाः |
| 16b | विभूतीरात्मानः शुभाः | दिव्या ह्यात्मविभूतयः |
| 17b | त्वामहं प्रविचिन्तयन् | त्वां सदा परिचिन्तयन् |
| 19b | विभूतीरात्मनः शुभाः | दिव्या ह्यात्मविभूतयः |
| 22a | वेदानां सामवेदोऽहम् | वेदानां सामवेदोऽस्मि |
| 24c | सेनान्यामप्यहं स्कन्दः | सेनानीनामहं स्कन्दः |
| 25b | गिरामप्येकमक्षरम् | गिरामस्म्येकमक्षरम् |
| 42b | किं ज्ञानेन तवार्जुन | किं ज्ञातेन तवार्जुन |
| 42d | एकांशेन जगत् स्थितः | एकांशेन स्थितो जगत् |

## एकादशोऽध्यायः

| | | |
|---|---|---|
| 2b | श्रुतो विस्तरतो मया | श्रुतो विस्तरशो मया |
| 3b | आत्मानं परमेश्वरम् | आत्मानं परमेश्वर |
| 4c | योगीश्वर ततो मे त्वम् | योगेश्वर ततो मे त्वम् |

| | | |
|---|---|---|
| 6d | पश्याश्चर्याणि पाण्डव | पश्याश्चर्याणि भारत |
| 8d | पश्य मे रूपमैश्वरम् | पश्य मे योगमैश्वरम् |
| 9b | महायोगीश्वरो हरिः | महायोगेश्वरो हरिः |
| 11a | दिव्यमालान्बरधरम् | दिव्यमाल्याम्बरधरम् |
| 15d | ऋषींश्च सर्वानुरगांश्च दीप्तान् | ऋषींश्च सर्वानुरगांश्च दिव्यान् |
| 17c | पश्यामि त्वां दुर्निरीक्षं समन्तात् | पश्यामि त्वां दुर्निरीक्ष्यं समन्तात् |
| 18c | त्वमव्ययः सात्त्वतधर्मगोप्ता | त्वमव्ययः शाश्वतधर्मगोप्ता |
| 20c | दृष्ट्वाद्भुतं रूपमिदं तवेदृक् | दृष्ट्वाद्भुतं रूपमिदं तवोग्रम् |
| 21c | स्वस्तीति चोक्त्वैव महर्षिसंघाः | स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः |
| 26a | अमी सर्वे धृतराष्ट्रस्य पुत्राः | अमी च त्वां धृतराष्ट्रस्य पुत्राः |
| 26b | सर्वैः सहैवावनिपालसंघैः | सर्वे सहैवावनिपालसंघैः |
| 28 | नानारूपैः पुरुषैर्बाध्यमाना<br>विशन्ति ते वक्त्रमचिन्त्यरूपम् ।<br>यौधिष्ठिरा धार्तराष्ट्राश्च योधाः<br>शस्त्रैः कृत्ता विविधैः सर्व एव । | नास्ति |

| | | |
|---|---|---|
| | त्वत्तेजसा निहता नून-मेते तथा हीमे त्वच्छरीरे प्रविष्टाः ॥ | नास्ति |
| 29b | समुद्रमेवाभिमुखा व्रजन्ति | समुद्रमेवाभिमुखा द्रवन्ति |
| 29d | विशन्ति वक्त्राण्यभितो ज्वलन्ति | विशन्ति वक्त्राण्यभिवि-ज्वलन्ति |
| 33a | कालोऽस्मि लोकक्षयकृत् प्रवृद्धान् | कालोऽस्मि लोकक्षयकृत् प्रवृद्धः |
| 35b | कर्णं तथान्यानपि लोक-वीरान् | कर्णं तथान्यानपि योध-वीरान् |
| 38a | कस्माच्च ते न नमेयुर्म-हात्मन् | कस्माच्च ते न नमेरन्महा-त्मन् |
| 39d | त्वया ततं विश्वमनन्त-रूपम् | त्वया ततं विश्वमनन्तरूप |
| 40c, 40d | अनादिमानप्रतिमप्रभावः सर्वेश्वरः सर्वमहा-विभूतिः । | नास्ति |
| 42a, 42b | न हि त्वदन्यः कश्चिदपीह देव लोकत्रये दृश्यतेऽचिन्त्य-कर्मा । | नास्ति |
| 42e | अनन्तवीर्योऽमितविक्रम-स्त्वम् | अनन्तवीर्यामितविक्रमस्त्वम् |
| 43a | सखेति मत्वा प्रसभं यदुक्तः | सखेति मत्वा प्रसभं यदुक्तम् |

| | | |
|---|---|---|
| 43b | हे कृष्ण हे यादव हे सखे च | हे कृष्ण हे यादव हे सखेति |
| 43c | अजानता महिमानं तवेमम् | अजानता महिमानं तवेदम् |
| 44c | एकोऽथवाप्यच्युत सत्समक्षम् | एकोऽथ वाप्यच्युत तत्समक्षम् |
| 45b | त्वमस्य विश्वस्य गुरुर्गरीयान् | त्वमस्य पूज्यश्च गुरुर्गरीयान् |
| 46d | प्रियः प्रियस्यार्हसि देव सोढुम् | प्रियः प्रियायार्हसि देव सोढुम् |
| 47 | दिव्यानि कर्माणि तवाद्भुतानि<br>पूर्वाणि पूर्वेऽप्यृषयः स्मरन्ति ।<br>नान्योऽस्ति कर्ता जगतस्त्वमेको<br>धाता विधाता च विभुर्भवश्च ॥ | नास्ति |
| 48 | तवाद्भुतं किं नु भवेदसह्यं<br>किं वा शक्यं परतः कीर्तयिष्ये ।<br>कर्तास्य सर्वस्य यतः स्वयं वै<br>विभो ततः सर्वमिदं त्वमेव ॥ | नास्ति |

| | | |
|---|---|---|
| 49 | अत्यद्भुतं कर्म न दुष्करं ते<br>कर्मोपमानं न हि विद्यते ते ।<br>न ते गुणानां परिमाण- मस्ति<br>न तेजसो नापि बलस्य नर्द्धेः ॥ | नास्ति |
| 53a | न वेदयज्ञाधिगमैर्न दानैः | न वेदयज्ञाध्ययनैर्न दानैः |
| 53c | एवंरूपं शक्यमहं नृलोके | एवंरूपः शक्य अहं नृलोके |
| 54a | मा ते व्यथा मा च विमूढता भूत् | मा ते व्यथा मा च विमूढ- भावः |
| 54b | दृष्ट्वा रूपं घोरमुग्रं ममेदम् | दृष्ट्वा रूपं घोरमीदृङ्म- मेदम् |
| 59a | भक्त्या त्वनन्यया शक्यो | भक्त्या त्वनन्यया शक्य |
| 59b | ह्यहमेवंविधोऽर्जुन । | अहमेवंविधोऽर्जुन । |

**द्वादशोऽध्यायः**

| | | |
|---|---|---|
| 5d | देहभृद्भिरवाप्यते | देहवद्भिरवाप्यते |
| 8c | निवत्स्यसि त्वं मय्येव | निवसिष्यसि मय्येव |
| 8d | योगमुत्तममास्थितः । | अत ऊर्ध्वं न संशयः । |
| 9a | अथावेशयितुं चित्तम् | अथ चित्तं समाधातुम् |
| 10a | अभ्यासेऽप्यसमर्थः सन् | अभ्यासेऽप्यसमर्थोऽसि |
| 12d | त्यागाच्छान्तिरनन्तरा | त्यागाच्छान्तिरनन्तरम् |
| 16c | सर्वारम्भफलत्यागी | सर्वारम्भपरित्यागी |
| 17c | शुभाशुभफलत्यागी | शुभाशुभपरित्यागी |

| | | |
|---|---|---|
| 20a | ये तु धर्मामृतमिदम् | ये तु धर्म्यामृतमिदम् |

## त्रयोदशोऽध्यायः

| | | |
|---|---|---|
| 1c | एतद्यो वेद तं प्राहुः | एतद्यो वेत्ति तं प्राहुः |
| 3c | स च यो यत्स्वभावश्च | स च यो यत्प्रभावश्च |
| 4d | हेतुमद्भिर्विनिश्चितम् | हेतुमद्भिर्विनिश्चितैः |
| 11a | अध्यात्मज्ञाननिष्ठत्वम् | अध्यात्मज्ञाननित्यत्वम् |
| 16a | अविभक्तं विभक्तेषु | अविभक्तं च भूतेषु |
| 18a | एतत् क्षेत्रं तथा ज्ञानम् | इति क्षेत्रं तथा ज्ञानम् |
| 26a | यावत् किञ्चित्संभवति | यावत्संजायते किञ्चित् |
| 26c | क्षेत्रक्षेत्रज्ञसंयोगि | क्षेत्रक्षेत्रज्ञसंयोगात् |
| 29a | प्रकृत्यैव हि कर्माणि | प्रकृत्यैव च कर्माणि |

## चतुर्दशोऽध्यायः

| | | |
|---|---|---|
| 3b | तस्मिन् गर्भं ददाम्यहम् | तस्मिन् गर्भं दधाम्यहम् |
| 10b | सत्त्वं भारत वर्धते | सत्त्वं भवति भारत |
| 11b | प्रकाशमुपजायते | प्रकाश उपजायते |
| 12b | कर्मणामशमश्च तृट् | कर्मणामशमः स्पृहा |
| 14a | यदा सत्त्वे विवृद्धे तु | यदा सत्त्वे प्रवृद्धे तु |
| 17c | प्रमादमोहौ जायेते | प्रमादमोहौ तमसो |
| 17d | तमसोऽज्ञानमेव च | भवतोऽज्ञानमेव च । |
| 23d | योज्ञस्तिष्ठति नेङ्गते | योऽवतिष्ठति नेङ्गते |
| 24a | समदुःखसुखस्वप्नः | समदुःखसुखः स्वस्थः |
| 25c | सर्वारम्भफलत्यागी | सर्वारम्भपरित्यागी |

## पञ्चदशोऽध्यायः

| | | |
|---|---|---|
| 3d | असंगशस्त्रेण शितेन छित्वा | असंगशस्त्रेण दृढेन छित्वा |
| 4b | यस्मिन्गतो न निवर्तेत भूयः | यस्मिन्गता न निवर्तन्ति भूयः |
| 4c | तमेव चाद्यं पुरुषं प्रपद्येद् | तमेव चाद्यं पुरुषं प्रपद्ये |
| 10a | तिष्ठन्तमुत्क्रामन्तं वा | उत्क्रामन्तं स्थितं वापि |
| 14b | प्राणिनां देहमास्थितः | प्राणिनां देहमाश्रितः |
| 15d | वेदान्तकृद्वेदकृदेव चाहम् | वेदान्तकृद्वेदविदेव चाहम् |
| 18b | अतीतोऽक्षरमेव च | अक्षरादपि चोत्तमः |

## षोडशोऽध्यायः

| | | |
|---|---|---|
| 2b | त्यागोऽसक्तिरपैशुनम् | त्यागः शान्तिरपैशुनम् |
| 2c | दया भूतेष्वलौल्यं च | दया भूतेष्वलोलुप्त्वम् |
| 3a | तेजः क्षमा धृतिस्तुष्टिः | तेजः क्षमा धृतिः शौचम् |
| 6c | दैवो विस्तरतः प्रोक्तः | दैवो विस्तरशः प्रोक्तः |
| 8d | अकिञ्चित्कामहेतुकम् | किमन्यत्कामहैतुकम् |
| 9d | क्षयाय जगतोऽशुभाः | क्षयाय जगतोऽहिताः |
| 10b | दम्भलोभमदान्विताः | दम्भमानमदान्विताः |
| 10c | असद्ग्रहाश्रिताः क्रूराः | मोहाद्गृहीत्वासद्ग्राहान् |
| 10d | प्रचरन्त्यशुचिव्रताः | प्रवर्तन्तेऽशुचिव्रताः |
| 12c | ईहन्ते कामभोगार्थान् | ईहन्ते कामभोगार्थम् |
| 16a | अनेकचित्ता विभ्रान्ता | अनेकचित्तविभ्रान्ता |
| 16b | मोहस्यैव वशं गताः | मोहजालसमावृताः |

| | | |
|---|---|---|
| 16d | पतन्ति निरयेऽशुचौ | पतन्ति नरकेऽशुचौ |
| 19c | क्षिपाम्यजस्रमशुभास् | क्षिपाम्यजस्रमशुभान् |
| 22a | एतैर्वियुक्तः कौन्तेय | एतैर्विमुक्तः कौन्तेय |

## सप्तदशोऽध्यायः

| | | |
|---|---|---|
| 1b | वर्तन्ते श्रद्धयान्वितः | यजन्ते श्रद्धयान्विताः |
| 2d | तामसी चेति ताः शृणु | तामसी चेति तां शृणु |
| 4c | भूतप्रेतपिशाचांश्च | प्रेतान् भूतगणांश्चान्ये |
| 5b | तपस्तप्यन्ति ये जनाः | तप्यन्ते ये तपो जनाः |
| 6b | भूतग्राममचेतनम् | भूतग्राममचेतसः |
| 11c | यष्टव्यमित्येव मनः | यष्टव्यमेवेति मनः |
| 12b | दम्भार्थमपि चैव यः | दम्भार्थमपि चैव यत् |
| 12c | इज्यते विद्धि तं यज्ञं | इज्यते भरतश्रेष्ठ |
| 12d | राजसं चलमध्रुवम् | तं यज्ञं विद्धि राजसम् |
| 17a | श्रद्धया परयोपेतं | श्रद्धया परया तप्तम् |
| 19a | मूढग्रहेणात्मनो यत् | मूढग्राहेणात्मनो यत् |
| 21d | तद्राजसमिति स्मृतम् | तद्दानं राजसं स्मृतम् |
| 23c | ब्रह्मणा तेन वेदाश्च | ब्राह्मणास्तेन वेदाश्च |
| 26d | सच्छब्दः पार्थ गीयते | सच्छब्दः पार्थ युज्यते |

## अष्टादशोऽध्यायः

| | | |
|---|---|---|
| 6a | एतान्यपि च कर्माणि | एतान्यपि तु कर्माणि |
| 7a | नियतस्य च संन्यासः | नियतस्य तु संन्यासः |
| 8a | दुःखमित्येव यः कर्म | दुःखमित्येव यत् कर्म |
| 10b | कुशले नानुषज्जति | कुशले नानुषज्जते |
| 13a | पञ्चेमानि महावाहो | पञ्चैतानि महाबाहो |

| | | |
|---|---|---|
| 14c | त्रिविधा च पृथक्चेष्टा | त्रिवधाश्च पृथक्चेष्टाः |
| 14d | दैवमेवात्र पञ्चमम् | दैवं चैवात्र पञ्चमम् |
| 15a | शरीरवाङ्मनोभिर्हि | शरीरवाङ्मनोभिर्यत् |
| 15b | यत्कर्मारभतेऽर्जुन | कर्म प्रारभते नरः |
| 21d | तद्राजसमिति स्मृतम् | तज्ज्ञानं विद्धि राजसम् |
| 22a | यत्त्वकृत्स्नवदेकस्मिन् | यत्तु कृत्स्नवदेकस्मिन् |
| 22b | कार्ये सक्तमहेतुकम् | कार्ये सक्तमहैतुकम् |
| 24c | क्रियते क्लेशबहुलम् | क्रियते बहुलायासं |
| 24d | तद्राजसमिति स्मृतम् | तद्राजसमुदाहृतम् |
| 25b | अनवेक्ष्य च पौरुषम् | अनपेक्ष्य च पौरुषम् |
| 27d | राजसः परिकीर्त्यते | राजसः परिकीर्तितः |
| 28c | विषादी दीर्घसूत्रश्च | विषादी दीर्घसूत्री च |
| 30c | बन्धं मोक्षं च या बुद्धि- | बन्धं मोक्षं च या वेत्ति |
| 30d | र्वेद सा सात्त्विकी मता | बुद्धिः सा पार्थ सात्त्विकी |
| 32b | बुद्ध्यते तमसान्विता | मन्यते तमसावृता |
| 32d | बुद्धिः सा तामसी मता | बुद्धिः सा पार्थ तामसी |
| 33d | धृतिः सा सात्त्विकी मता | धृतिः सा पार्थ सात्त्विकी |
| 35d | धृतिः सा तामसी मता | धृतिः सा पार्थ तामसी |
| 36d | दुःखान्तं च नियच्छति | दुःखान्तं च निगच्छति |
| 37a | यत्तदात्त्वे विषमिव | यत्तदग्रे विषमिव |
| 37c | तत्सुखं सात्त्विकं विद्यात् | तत्सुखं सात्त्विकं प्रोक्तम् |
| 38b | यत्तदात्वेऽमृतोपमम् | यत्तदग्रेऽमृतोपमम् |
| 38d | तद्राजसमिति स्मृतम् | तत्सुखं राजसं स्मृतम् |

| | | |
|---|---|---|
| 42a | शमो दमस्तथा शौचम् | शमो दमस्तपः शौचम् |
| 42d | ब्राह्मं कर्म स्वभावजम् | ब्रह्मकर्म स्वभावजम् |
| 43d | क्षात्रं कर्म स्वभावजम् | क्षत्रकर्म स्वभावजम् |
| 44c | पर्युत्थानात्मकं कर्म | परिचर्यात्मकं कर्म |
| 46b | येन विश्वमिदं ततम् | येन सर्वमिदं ततम् |
| 54b | न शोचति न हृष्यति | न शोचति न काङ्क्षति |
| 55b | योऽहं यश्चास्मि तत्त्वतः | यावान् यश्चास्मि तत्त्वतः |
| 57b | मयि संन्यस्य भारत | मयि संन्यस्य मत्परः |
| 57c | बुद्धियोगं समाश्रित्य | बुद्धियोगमुपाश्रित्य |
| 58c | अथ चेत् त्वमहङ्कारं | अथ चेत् त्वमहङ्कारा- |
| 58d | न मोक्ष्यसि विनंक्ष्यसि | न्न श्रोष्यसि विनङ्क्ष्यसि |
| 59c | मिथ्यैव व्यवसायस्ते | मिथ्यैष व्यवसायस्ते |
| 61b | हृद्येष वसतेऽर्जुन | हृद्देशेऽर्जुन तिष्ठति |
| 62c | मत्प्रसादात् परां सिद्धिम् | तत्प्रसादात् परां शान्तिम् |
| 64c | इष्टोऽसि मे दृढमतिः | इष्टोऽसि मे दृढमिति |
| 68d | स मामेष्यत्यसंशयः | मामेवैष्यत्यसंशयः |
| 73c | स्थितोऽस्मि गतसंमोहः | स्थितोऽस्मि गतसन्देहः |
| 75b | एतद्गुह्यतरं महत् | एतद्गुह्यमहं परम् |
| 75c | योगं योगीश्वरात् कृष्णात् | योगं योगेश्वरात् कृष्णात् |
| 77a | तच्च संस्मृत्य परमम् | तच्च संस्मृत्य संस्मृत्य |
| 77c | विस्मयो मे महाराज | विस्मयो मे महान् राजन् |
| 77d | प्रहृष्ये च पुनः पुनः | हृष्यामि च पुनः पुनः |
| 78a | यत्र योगीश्वरः कृष्णः | यत्र योगेश्वरः कृष्णः |

## ३. अभिनवगुप्तपादीयश्लोकानामनुक्रमणिका



## ४. आकरग्रन्थकर्तृनाम्नामनुक्रमणिका

## ५. आकरग्रन्थनाम्नामनुक्रमणिका

## ६. विशेषशब्दानामनुक्रमणिका

## अनुबन्धः

## अ—परिशिष्टम्

Page 6. Add to foot-note 1 : S reads दृष्ट्वा तु पाण्डवानीकमित्यादि । किं वा अनेन बहु—

Page 15. Add to foot-note 1 : S omits the entire sentence.

Page 39. After line 1 add : श्लो. १८ (व्या) पूर्वस्मिन् पद्ये आत्मनः सत्त्वमविनाशित्वं च स्थापितं युक्त्या । अतः पूर्वपरामृष्टनिवृत्त्यर्थकत्वं प्रकृतपद्ये तु-शब्दस्य न संभवति इति विचिन्त्याभिप्रेतार्थमाह— **तुश्चार्थे** इति ॥

Page 39. To line 20 add : अथवा बुद्धियोंगे त्विमां शृणु इत्येव पाठ आचार्यस्यापि । परन्तु अत्र तुः अवधारणार्थकः । 'तु स्याद्भेदेऽवधारणे' इत्यमरात् । इमामिति प्रथमपादोक्तां बुद्धिं परामृशति । यथातथेत्यध्याहार्यम्, औचित्यात् इति मत्वेव आचार्यः श्लोकतात्पर्यमाह— **एषैव चेत्यादिना** इति यथाकथंचिन्नेयम् ॥

Page 40. To line 14 add : ननु बुद्धिप्राप्तये खल्वयमारम्भः । सा न प्राप्तैवैतावता । असिद्धायां तस्यां कथं शरणान्वेषणम्? इत्याशङ्क्य गीतातात्पर्यमाह—**शरणमन्विच्छ प्रार्थयस्वे**त्यादिना ।

Page 40. To the last line add : प्रकृतगीतापद्ये आसीत इत्यस्य अभ्यसेदित्यर्थाभ्युपगमे **किमिति** द्वितीयाया उपपत्तिः ।

एवं सप्तम्यर्थे द्वितीया इत्यपि वक्तुं शक्यम् । अत आह—**क्वायस्येत्यादिना** ।

Page 60. To line 15 add : अत एवानुपदमेव वक्ष्यति 'यः सुखोपायं सिद्धिम् अपवर्गं वा प्रेप्सति' इति ।।

Page 66. Add after line 5 : संग्रहश्लोके **योऽन्यत्वेनेत्यादि** । तथा च वक्ष्यत्याचार्यः – 'यथा वेशमान्तर्गतपुरुषस्य न गृहगतैर्जीर्णत्वादिभिर्न योगः, एवं मम चक्षुरादिच्छिद्रगवाक्षनवकालंकृतगेहगतस्य न तद्धर्मयोगः' इति (V, 16) । परन्त्विदं लोकदृष्ट्यैव । रहस्यविदामाशयस्त्विदानीमेवोपदर्शित आचार्येण ।।

Page 96. Add after line 15 : अथवा, न वैदिकं स्मार्तं वा, अग्निहोत्रादिकर्ममात्रं विवक्षितम्, परन्तु क्रियासामान्यमेव । घटादि निष्पादयिता कुलालादिः तदीयाः क्रियाः दण्डचक्रभ्रमणादयः, तत्फलं घटादि इत्येतत् सर्वं प्रकृते विवक्षितम् । सर्वस्यापि संविदन्तर्गतत्वात् इत्यभिप्रायः ।।

Page 116. To line 10 add : **तेषां भासनोपपत्तौ द्रष्टृतायां परिपूर्णायामिति** । अयमभिप्रायः— 'भावा भासन्ते' इति सर्वेषां नो विदितम् । भासमानतयैव भावानां तेषां द्रष्टृत्वं निश्चेतव्यम् । 'यो यो भासते, स द्रष्टा, यथा अहम्' इति व्याप्तेः इति । अपि च भावांश्च मयि पश्यति इत्यादि व्याख्यावचनेन अयमन्योऽप्यर्थः प्रकृतगीताश्लोकस्येति सूचितमिवाचार्येण । तथाहि— यो योगी सर्वत्रगं मां परमात्मानम् अहं-

विमर्शरूपं पश्यति; कथं पश्यति? एवं पश्यति– 'सर्वं, वस्तुजातं सर्वं कर्मभूतं, मयि कर्तरि (अस्मच्छब्दो योगिनं परामृशति) पश्यति सति, मां कर्मभूतं, सर्वं वस्तुजातं कर्तृभूतं पश्यति' इति पश्यति। तस्य योगिनः अहं परमात्मा न प्रणश्यामि, सर्वत्र सर्वभावेषु तं प्रति तस्य भासमानत्वात्। स चापि मे परमात्मनो न प्रणश्यति, सर्वभावरूपेण परमात्मना कर्त्रा तस्य योगिनो दृश्यमानत्वात्। तदुक्तं शिवदृष्टौ—

मदात्मना घटो वेत्ति वेद्म्यहं वा घटात्मना।

सदाशिवात्मना वेद्मि स वा वेत्ति मदात्मना ॥ (५.१०५)

इति। अयं च शिवाद्वैतवादिनां घण्टापथः।

Page 129. At the end of the first paragraph add : अधिकमाङ्लभाषानुवादविचारे। एवं च मोहमायावशंगतैः अपरेति जडेति च ज्ञायमाना पृथिव्यादिजगदाकारेण भासमाना येयं प्रकृतिः ततोऽनन्यैव अभिन्नैव जीवरूपा अहंविमर्शात्मिका परा चिदाख्या मे प्रकृतिः; तया परया प्रकृत्यैवेदं भूम्यादिजगत् धार्यते इति विद्धि इति वाक्यार्थः। वक्ष्यति चाचार्यः त्रयोदशाध्याये द्वाविंशश्लोकव्याख्यानावसरे— 'प्रकृतिः, तद्विकारा घटपटादयः, चतुर्दशविधः सर्गः, तथा पुरुषः एतत्सर्वम् अनादि नित्यं च ब्रह्मतत्त्वाच्छुरितत्वे सति तदनन्यत्वात्' इति। प्रकृते च, एतादृशपरप्रकृतिधृत्यभावे जगदिदमन्धमधृतमुत्सीदेत् इति तात्पर्यम् ॥

Page 151. After line 9 add : **इच्छाशक्त्यात्मनि सकलतत्त्वातीते** इति। तथा चात्र गीतापद्ये द्वादशे मूर्धन्शब्दः

सर्वेषामुपरिवर्तमानत्वरूपगुणयोगेन इच्छाशक्त्यात्मनि सकलतत्त्वानामुपरिस्थे प्रयुक्त इति भावः। अत्र इच्छेति ज्ञानक्रिययोरप्युपलक्षणम्। अधिकमाङ्लभाषानुवादविचारे॥

Page 170. Add to line 9 : द्वितीयेऽस्मिन् पक्षे विधिः पूर्वः ज्ञापकः न भवति यस्मिन् कर्मणि तत् अविधिपूर्वकमिति यजतिक्रियाविशेषणम्। विधिपूर्वको न भवतीत्यविधिपूर्वकः तमिति विग्रहेण मामित्यस्मच्छब्दार्थविशेषणं वा॥

Page 212, line 18. After स च द्वात्रिंशत्संख्याकः। add : इदं च सांख्यमतानुसारेण। आचार्याभिमतशिवाद्वैतमते तु स विकारः षट्त्रिंशत्संख्याक इति बोध्यम्।

Page 224. To line 5 add : अथवा आत्मतयेत्येव पाठः। तस्य च परिमितव्याप्तिकतयेत्यर्थः। तदुक्तमाचार्यैरेव त्रयोदशाध्यायारम्भे प्रथमद्वितीयश्लोकव्याख्यानावसरे 'परिमितव्याप्तिकं रूपमवलम्ब्य आत्मेति भण्यते' इति।

Page 234. Add to foot-note 5 : S हित्वा।



## आ— शुद्धाशुद्धपाठपट्टिका

| पृष्टम् | पङ्क्तिः | शुद्धः पाठः | अशुद्धः पाठः |
|---|---|---|---|
| 15 | 8 | आदौ | आदो |
| 21 | 13 | शाश्वतोऽयं | शाश्वतोऽय |
| 23 | 4 | नैवं | नैनं |
| 31 | 3 | यदा | यथा |
| 37 | 8 | निरहंकारः | निरहंकारो |
| 44 | 13 | ४-५ | ५-५ |
| 45 | 1 | क्रियमाणेषु | क्रियामाणेषु |
| 51 | 4 | कर्ता स्याम् | कर्ताहम् |
| 57 | 16 | देहिनम् | देहिनाम् |
| 61 | 5 | इतिशब्द- | इति शब्द- |
| 63 | 12 | ज्ञापयतीव | ज्ञापयितीव |
| 65 | 18 | अनपायिना | अनयायिनी |
| 69 | 1 | परिपूर्णच्छत्वात् | परिपूणच्छत्वात् |
| 71 | 9 | पश्यत्यकर्मणि | पश्येवकर्मणि |
| 91 | 11 | निर्धौत | निर्धूत |
| 94 | 4 | विमुक्तानाम् | वियुक्तानाम् |
| 98 | 20 | I, i, 2 | II, i, 2 |
| 103 | 1 | तज्जयः | तज्जय |
| 103 | 12 | स्थितः | स्थिरः |
| 110 | 21 | जातु | तात |
| 117 | 11 | ४५-४७ | ५-४७ |
| 117 | 11 | एवकारार्थे | एवकार्थे |
| 121 | 6 | गगनगुणतया | गगनगुणया |
| 124 | 11 | चतुर्विधा | चर्तुविधा |
| 131 | 8 | विशेषेण | विशेण |

| पृष्ठम् | पङ्क्तिः | शुद्धः पाठः | अशुद्धः पाठः |
|---|---|---|---|
| 143 | 5 | इत्युक्त- | इत्याहु- |
| 147 | 19 | खल्विदं | खलिदं |
| 150 | 20 | मनो हृदि | हृदि |
| 150 | 21 | नियतं | नित्यतं |
| 159 | 12 | तोयं | तोऽयं |
| 200 | 17 | फलत्यागी | परित्यागी |
| 202 | 2 | -ब्रह्मोपासका | -ब्रह्मोपासक |
| 218 | 4 | रजः | रज |
| 222 | 7 | तनुः | तनु |
| 235 | 6 | प्रैष्यानु- | प्रेषानु- |
| 236 | 15 | इत्याचार्यः | इत्यार्चः |
| 244 | 8 | त्यजतः | त्यजत |
| 246 | 19 | शक- | शाख- |
| 256 | 10 | कुतः | कुत |
| 265 | 18 | पृथक्चेष्टा | पृथक् चेष्टा |

